"अथ फलकयन्त्रार्थमाह ।
इष्टाखवेऽथ स्फुटकाल उन्नतः
सुखेन नाम्भेर्युतितं मयातः ।
यन्त्रोत्तमं संचितसार्थ सारं
अहं प्रवक्ष्ये फलकाख्ययन्त्रम् ।"
"इदानीं यन्त्रलक्षणमाह ।
कर्णयुं चतुरस्रकं सुफलकं ज्याङ्गा-९० कुले-
र्विस्तृतं
विस्तारद्विगुणा-१८० यतं सुगणकेनायाममध्ये
तथा ।
आधारः सयत्नक्षिलादिघटितः कार्य्या च
[illegible]ला तत-
स्त्वाधारादवलम्बकस्य सदृशी वा लम्बरेखोच्यते ॥
लम्बं नवत्न-९० कुलकैर्विभज्य
प्रत्यङ्गुलं तिर्य्यगतः प्रसार्य ।
क्रमाज्जि तन्नायतसूत्ररेखा
जीवाभिधाना: सुधिया विधेयाः ॥
आधारतोऽथः खगुणा-३० कुलेषु
व्यासाम्बयोगे सुषिरच्च सूक्ष्मम् ।
इष्टप्रमाणा सुषिरे शलाका
क्षेप्याक्षसंज्ञा खलु सा प्रकल्प्या ॥
पष्ट्यङ्गुलव्यासमतच्च रन्ध्रात्
कृत्वा सुवृत्तं परिधौ तदङ्कम् ।
षष्ट्या घटीनां भगणांश-३६० कैश्च
प्रत्यंशकं चाप्युपलैश्च दिग्भिः ॥
अघे सरन्ध्रा तनुपट्टिकैका
षष्ट्यङ्गुला दीर्घतया तथाङ्क्या ।"
इदानीं यन्त्रोपकरणमाह ।
यत् खकके: स्थूलचरं पलाव्यं
तन्नोक्त-१९ हृत् स्याच्चरशिञ्जिनीह ।"
इदानीं यष्टिसाधनमाह ।
वेदाः ४ भवाः ११ शैलभुवो १७ धृतिश्च १८
विश्वे १३ च बाणाः ५ पलकर्णनिघ्नाः ।
अर्कोद्धृताः स्युः क्रमशः स्वदेशे
राश्यङ्कलग्नानि हि खण्डकानि ॥
तैः क्रान्तिपाताद्यरवेर्भुजज्या
षड्गुणताश्च प्रवयेन युक्ता ।
द्विघ्नी हृताप्ता भवतीह यष्टि
सा पट्टिकायां सुषिरात् प्रदेया ।"
इदानीं यष्टिप्रयोजनमाह ।
र्थं तथा फलकयन्त्रमिदं यथैव
सार्धयोर्नगति तुल्यमितस्य तिजः ।
ायाञ्जा भ्रमति तत्परिधौ यमंशं
नांशके मतिमता तरणिः प्रकल्प्यः ॥
चप्रोता रविलग्नमता पट्टिका यस्य तस्माद्-
देरयादुपरि पतत्यथ गोलक्रमेण ।
ादियचरदलगुणकास्य या ज्या तयाम्न
ं इति नतगघटिकाः स्युर्नता नम्रकाम्ता: ।"
अथ यष्टियन्त्रमाह ।
व्याविष्कम्भार्द्धं वृत्तं कृत्वा दिगङ्कितं तत्र ।
ायां प्राक् पश्चाद्युम्नद्दृतस्य तत्राग्रे ॥
परिधौ षष्ट्यङ्कं यष्टिर्दक्षुतिवृतः कृत्रे ।
चिच्चाङ्गुला निधेया षष्ट्याद्यान्तरं यावत् ॥
तावन्ना मौर्वी यद्वितीयदत्ते धनुर्भवेत् तत्र ।
दिग्गतघ्नी गाथः प्राक् पश्चात् स्युः क्रमेणैवम् ॥"
"इदानीं धीयन्त्रं विवक्षुराहौ तत्प्रशंसामाह ।
अथ किमु पृथुतन्त्रैर्धीमतो भूरियन्त्रैः
स्वकरकलितयष्टेर्दत्तमूलाग्रदृष्टेः ।
न तदविदितमानं वस्तु यद्दृश्यमानं
दिवि भुवि च जलस्थं प्रोच्यतेऽथ स्थलस्थम् ॥
अथ प्रश्नः ।
वंशस्य मूलं प्रविलोक्य चाग्रं
तत्स्थान्तरं तस्य समुच्छ्रयञ्च ।
यो वेत्ति यष्ट्यैव करस्थयासौ
धीयन्त्रवेदी वद किं न वेत्ति ॥"
"अथ यष्ट्या भुजवेधेन पलभामाह ।
यष्ट्यग्रमूलसंस्थं विदृध्वा ध्रुवमग्रमूलयोर्लम्बौ ।
बाह्वलम्बान्तरभूलम्बोच्छ्रायान्तरं कोटिः ॥
कोटिर्द्वादशगुणिता बाहुविभक्ता पलप्रभा
ज्ञेया ॥"
"इदानीं वंशादिवेधमाह ।
विदृध्वेवं वंशतलं दृगुच्छ्रायाहताद्वाहोः ।
कोभ्या लब्धं ज्ञेयं स्ववंशमध्ये महीमानम् ॥
विद्धायो वंशाग्रं भूमानं कोटिसंगुणं भक्तम् ।
दोष्णा वंशोच्छ्रायो दृगुच्छ्रायेण संयुतो ज्ञेयः ॥
उदाहरणम् ।
पञ्चघ्नाङ्गुला १४५ यष्टिरष्टयष्टिर्दृगुच्छ्रयः ।
षट्करासनवेधे दीः कोटिः सप्तदशाङ्गुला ॥
अग्रवेधे रसेशा ११६ दोः कोटिस्तुरगकुञ्जराः ।
वंशस्य यस्य तन्मानं चालवंशान्तरं वद ।"
"अथ केवलाग्रवेधेनाह ।
अग्रं विध्वोर्ध्वस्य पुनरपविश्य तद्विद्धेत् ॥
निजभुजभक्ते कोटी तदन्तरहृतो दृगौच्च्यविश्लेषः
भूमिर्वंशोच्चमतः पृथक् पृथक् पूर्ववज्ज्ञेयम् ॥
अथ प्रश्नः ।
ऊर्ध्वस्थस्य ग्रहादिभिर्यवहितस्याप्यग्रमात्रं सखे ।
वंशस्य प्रगुणस्य यस्य सुसमे देशे समालोक्यते ।
अत्रैव समवस्थितो [illegible] वदस्याप्यान्तरं चोच्छ्रयं
मन्ये यन्त्रविदां वरिष्ठ [illegible]रवीं यातोऽसि धीयन्त्र-
वित् ॥
उदाहरणम् ।
इष्टयष्ट्योर्ध्वंसंस्थेन वंशाग्रं विद्धता भुजः ।
दृष्टश्चतुष्करोऽथाग्रयष्ट्या व्याङ्गाङ्गुलः सखे ॥
निविष्टेन तथा कोटिरङ्गुलं वेधयोरपि ।
स्थालवंशान्तरं ब्रूहि वंशोच्छ्रायञ्च वेधवित् ॥"
"अथ जलान्तर्वेधमाह ।
एवं तोयेऽप्यौच्च्यं तत्र दृगौच्च्योनितं भवति ।
किंवा षष्ट्या कोटौ दृगुच्छ्रायौ जलान्तरे
नाह्र ॥
अथ प्रश्नः ।
दूरस्थस्य न दूरगस्य यदि वाऽदृश्य दृश्य वा
वंशस्य [illegible] वसिके दृश्यमानं सखे ।
अत्रैव समवस्थितो यदि वदस्याप्यान्तरं चोच्छ्रयं
त्वां सर्वज्ञमतीन्द्रियज्ञमनुजव्याजेन मन्ये भुवि ॥
उदाहरणम् ।
दृष्टा पैत् षडङ्गुला कोटिर्बाहुश्च चतुरङ्गुलः ।
ऊर्ध्वस्थेनोपविष्टेन बाहुरेकादशाङ्गुलः ॥
कोटिरष्टाङ्गुला तोये वंशाग्रं विध्यता सखे ।
नरकहस्तौ दृगुच्छ्रायौ वंशौच्च्यं चान्तरं वद ॥"
"किंवा यष्ट्यैवाख्योदाहरणम् ।
षड्ङ्गैरमरैस्तुल्यान्यङ्गुलान्यथवा क्रमात् ।
स्थालतोयान्तरं दृष्ट्वा वंशौच्च्यं चान्तरं वद ॥"
"अथ स्वयंवहमाह ।
लघुदारुजनेमिचक्रे समसुषिरारा: समान्तरा
श्चैव्याम् ।
किञ्चिद्वक्रास्तोभ्या: सुषिरस्यार्धे पृथक् तासाम् ॥
रसपूर्णे तच्चक्रं द्वयाधारास्थितं स्वयं भ्रमति ॥"
"अथान्यदाह ।
उत्कीर्य्य नेमिमथवा परितो मदनेन संलग्नम् ।
तदुपरि तालदलाद्यं कृत्वा सुषिरे रसं क्षिपेत्
तावत् ॥
यावन्नस्यैकपार्श्वे छिद्रजलं नाम्यतो याति ।
पिहितच्छिद्रं तदतच्चक्रं भ्रमति स्वयं जला-
कृष्टम् ॥"
"अथान्यदाह ।
ताम्रादिमयस्याङ्कुशरूपनलस्याम्बुपूर्णस्य ॥
एकं कुण्डजलान्तर्द्वितीयमग्रं त्वधोमुखञ्च
बहिः ।
युगपन्मुक्तं पैत् कं नलेन कुण्डाद्वहिः पतति ॥
नेम्यां बद्ध्वा घटिकाचक्रं जलयन्त्रवत् तथा
धार्य्यम् ।
नलकप्रच्युतसलिलं पतति यथा तद्घटीमध्ये ॥
भ्रमति ततस्तत् सततं पूर्णघटीभिः समाकृष्टम् ।
चक्रच्युतं तदुदकं कुण्डे याति प्रणालिकया ॥"
"इदानीमन्येषां स्वयंवहसुपहसन्नाह ।
यदधोरसमनं तत् चापिचलात् स्वयंवहं ग्राम्यम् ।
चतुरचमत्कारकरी युक्तियेन्न गहि ग्राम्या ॥
एवं बहुधा यन्त्रं स्वयंवहं कुहकविद्यया भवति ।
नैवं गोलाभिनया पूर्वोक्तत्वाच्छयाप्युक्तम् ॥"
इति सिद्धान्तशिरोमणौ गोले यन्त्राध्यायः ॥)

यन्त्रकं, क्ली, यन्त्रकाष्ठम् । (कुन्दम् । इति हेमचन्द्रः ।
४।५७१ ॥) कुँद इति भाषा । यन्त्यते काष्ठमने-
नेति यन्त्रधातोष्ट्रप्रत्ययेन यन्त्रं ततः स्वार्थे कप्रत्य-
येन निष्पन्नम् । ( यथा, सुश्रुते । ४ । २ ।
"काष्ठो लोपविकादन्य: कन्धोमावेश्य यन्त्रकम् ।
न कुर्य्यात् कण्ठविक्षिप्त तेन क्लिश्यति हि व्रणः ॥"
यन्त्रयति बध्नाति सेतुप्रभृतीनीति । यन्त्र+
ण्वुल् । सेतुप्रभृतिनिर्म्मातरि, त्रि । यथा, रामा-
यणे । २ । ८० । १ ।
"खनकर्म्माभिरता: शूरा: खनका यन्त्रकास्तथा ।"
"यन्त्रका जलप्रवाहादियन्त्रणसमर्था: ।" इति
तट्टीका ॥ )

यन्त्रगृहं, क्ली, ( यन्त्रस्य गृहम् । ) तैलिशाला ।
इति हेमचन्द्रः । ४ । ६२ ॥ घानिघर इति
भाषा ॥

यन्त्रगोलः, पुं, कलायविशेषः । इति शब्दचन्द्रिका ॥ मटर् इति भाषा ॥

यन्त्रणं, क्ली, (यन्त्र + ल्युट् ।) रक्षणम् । बन्धनम् । (यथा, सुश्रुते सूत्रस्थाने अष्टादशाध्याये । "यन्त्रणमत ऊर्द्धमधस्तिर्य्यक् ॥") नियमनम् । इति मेदिनी । णे, ७१ ॥ (यथा, सुश्रुते उत्तरतन्त्रे ४१ अध्याये ।
"रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।
शोषितस्य भवेच्छोषः स चासाध्यतमस्ततः ॥")

यन्त्रणा, स्त्री, (यन्त्र + "ण्यासश्रन्थो युच् ।" ३ । ३ । १०७ । इति युच् । टाप् ।) पीडा । यथा, नैषधे । ४ । १० ।
"मदनतापभरेण विदीर्य्य नो
यदुदयासि हृदा दमनस्वसः ।
निबिडपीनकुचद्वययन्त्रणा
तमपराधमधात् प्रतिबध्नती ॥"
(पीडाशब्देऽस्या विशेषो विज्ञेयः ॥)

यन्त्रपेषणी, स्त्री, (पिष्यतेऽनयेति । पिष् । करणे ल्युट् । ङीप् । यन्त्रमेव पेषणी ।) पेषणार्थयन्त्रम् । इति जटाधरः ॥ जाँता इति भाषा ॥

यन्त्रिका, स्त्री, (यन्त्रयति ज्ञातकौतुका पीडयतीति । यन्त्र + ण्वुल् । टापि अत इत्वम् ।) पत्न्याः कनिष्ठा भगिनी । यथा, हेमचन्द्रे ।
"कनिष्ठा श्यालिका स्यात्तौ यन्त्रिका केलि-
कुञ्चिका ॥"

यन्त्रितः, त्रि, (यन्त्र + क्तः ।) बद्धः । इति धरणिः ॥ (यथा, देवीभागवते । ३ । १७ । १७ ।
"ते भ्रात्रा जगृहुर्धेनुं बलादाक्रम्य यन्त्रिताम् ।
वेगमाना मुनिं प्राह सुरभिः साश्रुलोचना ॥")

यन्त्री, [न्] त्रि, यन्त्रविशिष्टः । यन्त्रशब्दादस्त्यर्थे इन्प्रत्ययेन निष्पन्नः ॥ (यन्त्रयति बध्नातीति । यन्त्र बन्धने + णिनिः । बन्धनकारकः । यथा, रामायणे । १ । १ । ७६ ।
"अक्षयोऽप्यस्त्रमाहात्म्यं ज्ञात्वा पैतामहाद्-
वरात् ।
मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यद्-
च्छया ॥")

यभ, ऌ मैथुने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-अनिट् ।) ऌ, अयाप्सीत् । यभति युवा । इति दुर्गादासः ॥

यम, उ उपरतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-अनिट् । क्त्वावेट् ।) उ, यन्त्वा । उ, यमित्वा यत्वा । विरतिर्निवृत्तिः । यच्छति पापात् साधुः । इति दुर्गादासः ॥

यम, क भि परिवेषणे । तदभावे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क भि, यमयति संयमयति । परिवेषणं अन्नादेरर्पणम् । वैष्णवमिश्रास्तु विवक्षयाभावविवक्षायां रूपमिति रमानाथः । केचित्तु परिवेषणे एवायं धातुरस्य । यमयत्यन्नं द्विजाय गृही । अन्ये च नियामयति संयामयति इत्याहुः । अन्ये तु अपरिवेषणे एवायं धातुरस्य । 'नियमयति विमार्गप्रस्थितानात्तदण्डः ।' इति शाकुन्तले । परिवेषणे तु यामयत्यन्नं द्विजाय गृही इत्याहुः । तेन उभयस्य प्रामाणिकत्वादुभयत्र विकल्पनायमनार्थत्वादुपस्थः कृतः । इति दुर्गादासः ॥

यमः, पुं, (यमयति नियमयति जीवानां फलाफलमिति । यम् + अच् ।) दक्षिणदिक्पालः । तत्पर्य्यायः । धर्म्मराजः २ पितृपतिः ३ समवर्त्ती ४ परेतराट् ५ कृतान्तः ६ यमुनाभ्राता ७ शमनः ८ यमराट् ९ कालः १० दण्डधरः ११ श्राद्धदेवः १२ वैवस्वतः १३ अन्तकः १४ । इत्यमरः । १ । १ । ६१ ॥ धर्म्मः १५ धर्म्मराट् १६ जीवितेशः १७ महिषध्वजः १८ औडुम्बरः १९ दण्डधारः २० कीनाशः २१ हरः २२ महिषवाहनः २३ शीर्णपादः २४ भीमशासनः २५ काद्रुः २६ हरिः २७ । इति शब्दरत्नावली ॥ कर्म्मकरः २८ । इति जटाधरः ॥ * ॥ चतुर्द्दशयमतर्पणं यथा,—
"यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्द्दशीम् ।
यमुनायां विशेषेण नियतस्तर्पयेद्यमान् ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औडुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन् दद्यात् जला-
ञ्जलीन् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥"
इति तिथ्यादितत्त्वधृतभविष्यपुराणवचनम् ॥
तस्योत्पत्तिर्यथा,—
"संज्ञा च रविणा दृष्टा निमीलयति लोचने ।
यतस्ततः सरोषोऽर्कः संज्ञां निष्ठुरमब्रवीत् ॥
मयि दृष्टे सदा यस्मात् कुरुषे नेत्रसंयमम् ।
तस्माज्जनिष्यसे मूढे ! प्रजासंयमनं यमम् ॥"
मार्कण्डेय उवाच ।
"ततस्तस्यास्तु संजज्ञे भर्त्तृशापेन तेन वै ।
यमश्च यमुना चेयं प्रख्याता सुमहानदी ॥"
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरे ७७ अः ॥
पुण्यात्मनां सम्बन्धे तस्य रूपं यथा,—
"तानागतांस्ततो दृष्ट्वा नरान् धर्म्मपरायणान् ।
भास्करिः प्रीतिमासाद्य स्वयं नारायणो भवेत् ॥
चतुर्ब्बाहुः श्यामवर्णः प्रफुल्लकमलेक्षणः ।
शङ्खचक्रगदापद्मधारी गरुडवाहनः ॥
स्वर्णयज्ञोपवीती च स्मेरचारुतराननः ।
किरीटी कुण्डली चैव वनमालाविभूषितः ॥"
पापिनां सम्बन्धे तस्य रूपं यथा,—
"त्रिंशद्योजनदीर्घाङ्गो वापीसदृशलोचनः ।
धूम्रवर्णो महातेजाः प्रलयाम्भोधरध्वनिः ॥
दृढाधिराजलोमा च ज्वलदग्निशिखाग्रवत् ।
नासारन्ध्रस्फुरच्छ्वासस्वनैर्ज्जितमहानिलः ॥
सुदीर्घदशनश्रेणिः शूर्पोपमनखावलिः ।
प्रचण्डमहिषारूढः संदष्टदशनच्छदः ॥
दण्डहस्तश्चर्म्मवासा भ्रूकुटीकुटिलाननः ॥"
इति पाद्मे क्रियायोगसारे २२ अध्यायः ॥

अस्यानधिकारो यथा,—
"प्रोवाच धर्म्मं वरदं ब्रवीमि
कार्य्यं मया तत् खलु धर्म्मराज ! ॥
ब्रह्मोवाच ।
ये भक्ताः पुण्डरीकाक्षे कर्म्मणा मनसा गिर
स्वकर्म्मनिरता दान्ता न नियम्या हि ते त्वय
स्वयं संपूजितो येस्तु यैः सदा समुपासित
येषां नित्यं स्मृतः कृष्णो न ते त्वद्विषयोपगाः
नमः कृष्णाच्युतानन्त वासुदेवेत्युदीरितम् ।
यैर्भावभावितो धर्म्म ! न ते त्वद्विषयोपगाः
दानं ददद्भिर्यैस्तस्मादच्युतः प्रीयतामिति ।
ब्रह्मापुरन्दरैर्द्धर्म्म ! न ते त्वद्विषयोपगाः ।
उत्तिष्ठद्भिः स्वपद्भिश्च व्रजद्भिश्च जनार्द्दनः ।
यैः स्मृतस्तु सदा धर्म्म ! न ते त्वद्विषयोपगा
सर्व्वबाधासु ये कृष्णं संस्मरन्त्युच्चरन्ति च ।
तद्भावभाविनो ये च न ते त्वद्विषयोपगाः ॥
स एव धाता सर्व्वस्य तन्नियोगकरा वयम् ।
यमसंयमने व्यक्तः सौऽव्यक्तसंयमको हरिः ॥
इति वह्निपुराणे नरसिंहप्रादुर्भावाध्यायः ॥
अपि च ।
ब्राह्मण उवाच ।
"यत् कृत्वा सुमहत् पुण्यं धर्म्माधर्म्मविनिश
प्रमाणं त्वं हि लोकानां फलं मे ब्रूहि तद्-
यम ! ।
यम उवाच ।
यमो यम इति श्रुत्वा तथा कुद्विजति ज
आत्मा च यमितो येन न तस्यैव यमः स्मृत
आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम्
ध्यानं प्रसादो माधुर्य्यं सन्तोषश्च यमा दश
यमैश्च नियमैश्चैव यः करोत्यात्मसंयमम् ।
स चाहत्वा तु मां याति परं ब्रह्म सनातनम्
इति तत्रैव यमद्विजोपाख्यानम् ॥ *
सावित्रीकृतं यमाष्टकं स्तोत्रं यथा,—
सावित्र्युवाच ।
"तपसा धर्म्ममाराध्य पुष्करे भास्करः पुरा
धर्म्मांशं यं सुतं प्राप धर्म्मराजं नमाम्यहम्
समता सर्व्वभूतेषु यस्य सर्व्वस्य साक्षिणः ।
अतो यन्नाम शमनमिति तं प्रणमाम्यहम् ।
येनान्तश्च कृतो विश्वे सर्व्वेषां जीविनां परम्
कर्म्मानुरूपकाले च तं कृतान्तं नमाम्यहम्
बिभर्त्ति दण्डं दण्डाय पापिनां शुद्धिहेतवे ।
नमामि तं दण्डधरं यः शास्ता सर्व्वजीविनाम्
विश्वे च कलयत्येव यः सर्व्वायुश्च सन्ततम् ।
अतीव दुर्निवार्य्यञ्च तं कालं प्रणमाम्यहम् ।
तपस्वी वैष्णवो धर्म्मी संयमी विजितेन्द्रियः ।
जीविनां कर्म्मफलदस्तं यमं प्रणमाम्यहम् ।
स्वात्मारामश्च सर्व्वज्ञो मित्रः पुण्यकृतां भवे
पापिनां क्लेशदो यस्तं पुण्यमित्रं नमाम्यहम्
यज्जन्म ब्रह्मणो वंशे ज्वलन्तं ब्रह्मतेजसा ।
यो ध्यायति परं ब्रह्म तमीशं प्रणमाम्यहम् ।
इत्युक्त्वा सा च सावित्री प्रणनाम यमं मुने ।
यमस्तां विष्णुभजनं कर्म्मपाकमुवाच ह ॥

अस्य ज्येष्ठत्वं यमशब्द द्रष्टव्यम् । (अश्वविशेषे, पुं । यथा, अश्ववैद्यके । १ । १५२ ।
"एकैनाङ्गेन हीनेन भिन्नेन च विशेषतः ।
यमजं वाजिनं विन्द्यात् वामनं वामना-
ङ्गतिम् ॥")

यमदग्निः, पुं, ( अमन् हुतभक्षणशील: प्रज्ज्वलितो ऽग्निरिव ।. पृषोदरादित्वात् जस्य यः । ) जमदग्निमुनिः । स तु परशुरामपिता । इति भरतद्विरूपकोषः ॥ ( विवृतिरस्य जमदग्निशब्दे द्रष्टव्या ॥ )

यमदूतः, पुं, ( यमस्य दूतः । ) यमस्य चरः । यथा,—
"यमदूतपिशाचाद्यैर्यत् परासुरुपास्यते ।
सद्भिरौषधवीर्य्याणि तस्मात्तं परिवर्ज्जयेत् ॥"
इति वाग्भटे शरीरस्थाने पञ्चमेऽध्याये ॥)
धर्म्मस्य उवाच ।
"के यूयं विकृताकाराः पाशमुद्गरपाणयः ।
दंष्ट्राकरालवदना अङ्गारसदृशप्रभाः ॥
यूयं सर्व्वे महावीराः ज्वलत्पावकलोचनाः ।
ज्ञाता तथापि युष्माकमियं केन सुदुर्गतिः ॥"
यमदूता ऊचुः ।
यमदूता वयं सर्व्वे यमाज्ञाकारिणः सदा ।
त्वद्दूतोऽयं दिनानाकं सुमहान् कश्मलो-
दयः ॥"
इति पद्मपुराणे क्रियायोगसारे ६ अध्यायः ॥

यमदूतकः, पुं, (यमस्य दूत इवेति कन् ।) काकः । इति शब्दरत्नावली ॥ (यमदूत + स्वार्थे कन् ।) यमदूतश्च ॥

यमदूतिका, स्त्री, ( यमस्य दूतिकेव । ) तिन्तिडी-वृक्षः । ( यथा,—
"जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः ।
किमाश्चर्य्यं चारभूमौ प्राणदा यमदूतिका ॥"
इत्युद्भटः ॥)

यमदेवता, स्त्री, (यमो देवता अधिष्ठात्री यस्याः ।) भरणीनक्षत्रम् । इति हेमचन्द्रः । २ । २२ ॥

यमद्रुमः, पुं, (यम इव भयावहो द्रुमः ।) शाल्मलि-वृक्षः । इति राजनिर्घण्टः ॥ ( विवरणमस्य शाल्मलिशब्दे ज्ञातव्यम् ॥ )

यमद्वितीया, स्त्री, (यमप्रिया द्वितीया इति मध्य-पदलोपिकर्म्मधारयः ।) कार्त्तिकशुक्लद्वितीया । भ्रातृद्वितीया इति ख्याता । तत्कृत्यं यथा । लिङ्गपुराणे ।
"कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् ।
या न कुर्य्याद्विनश्यन्ति भ्रातरः सप्तजन्मनि ॥"
तस्या इति शेषः । महाभारते ।
"कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ! ।
यमो यमुनया पूर्व्वं भोजितः स्वगृहे स्वयम् ।
तस्मान्निजगृहे पार्थ ! न भोक्तव्यमतो बुधैः ॥
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।
दानानि च प्रदेयानि भगिनीभ्यो विशेषतः ॥"
तथा ।
"यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् ।
अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वये: ॥"
सहजद्वयैर्भगिनीभ्रातृभिः । अर्घ्यमन्त्रः ।
"एह्येहि मार्त्तण्डज पाशहस्त
यमान्तकालोकधरामरेश ।
भ्रातृद्वितीयाकृतदेवपूजां
गृहाण चार्घ्यं भगवन्नमस्ते ॥
धर्म्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज ।
पाहि मां किङ्करैः सार्द्धं सूर्य्यपुत्र नमोऽस्तु ते ॥"
यमुनाञ्च संपूज्य नमस्कुर्य्यात् ।
"यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते ।
वरदा भव मे नित्यं सूर्य्यपुत्रि नमोऽस्तु ते ॥"
अन्नं दत्त्वा पठेत् ।
"भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः ॥"
ज्येष्ठा चेत् तदाग्रजाताहमिति वदेत् ॥ अत्र भोक्तव्यं पुष्टिवर्द्धनं इति विधिसमभिव्याहृत-फलश्रुत्या भोजननियमस्य प्राधान्यात्तस्य मुख्य-कालोऽह्नधाविभक्तदिनपञ्चमांशो ग्राह्यः । यथा दक्षः ।
"पञ्चमे च तथा भागे संविभागो यथार्हतः ।
पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते ॥
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ।
इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत् ॥"
संविभागो विभज्यान्नस्य प्रतिपादनम् । देवोऽत्र वैश्वदेवसम्बन्धी । पञ्चमांशालाभे तु ।
"न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् ।
नातिप्रगे नातिसायं नातिसन्ध्यासमीपतः ॥"
इति मनूक्तपर्य्युदस्तसूर्य्योदयास्ततरकालोऽपि ग्राह्यः । सौहित्यं तृप्तिः । अत्र भोजनस्य राग-प्राप्तत्वेऽपि तत्कालस्य ।
"मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्त्यवासिनां
नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः ॥"
इति कात्यायनीयेन नियमितत्वाद्भोजनकालस्य वैधत्वेन शास्त्रीयत्वात् न सामान्यशास्त्रप्राप्तप-र्य्युदासासङ्गतिः । अत्रानध्ययनं भ्राता-नाम् । प्रेतपक्षोत्तरद्वितीयायां तन्निषेधात् । यथा च राजमार्त्तण्डे ।
"प्रै को चे चा द्वितीयास्ताः प्रेतपक्षे गते तु या ।
या तु कोजागरे याते चैत्रावल्याः परेऽपि च ॥
चातुर्मास्ये समाप्ते च द्वितीया या भवेत्तिथिः ।
महाखेतास्वनध्यायः पुराणैः परिकीर्त्तितः ॥"
ज्योतिषे । तथा यमद्वितीयायां यात्रायां मरणं भवेत् । इति तिथ्यादितत्त्वम् ॥ *॥ अस्या व्रत-विधानं यथा,—
नारद उवाच ।
"भगवन् ! प्रष्टुमिच्छामि त्वामहं विनया-
न्वितः ।
तद्व्रतं ब्रूहि मे स्वामिन् ! मृत्युं येन न पश्यति ॥
अल्पदोषं महत्पुण्यं शोभनं व्रतमुत्तमम् ।
प्रसादं कुरु मे स्वामिन् ! यथाहं तत् करोमि
भोः ॥
ब्रह्मोवाच ।
यदि चेच्छसि विप्रेन्द्र व्रतानां व्रतमुत्तमम् ।
व्रतं यमद्वितीयाख्यं शृणु त्वं मृत्युवारकम् ॥
कार्त्तिके मासि शुक्लायां द्वितीयायां मुनीश्व
कर्त्तव्यं तद्विधानेन अपमृत्युनिवारणम् ॥
ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेदात्मनो हित
प्रातः स्नात्वा द्विजः स्नानं दन्तधावनपूर्व्वकम्
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
कृतनित्यक्रियो हृष्टः कुण्डलाङ्गदभूषितः ॥
विधिं विष्णुञ्च रुद्रञ्च संस्थाप्यौदुम्बरे शुभे ।
यमं चमरकं कृत्वा पूजयेत् सुसमाहितः ॥
चन्दनागुरुकर्पूरकुङ्कुमैर्द्विजसत्तम ! ।
*पुष्पैर्धूपैश्च नैवेद्यैर्नारिकेलादिभिः फलैः ॥
सरस्वतीञ्च वरदां वीणापुस्तकधारिणीम् ।
ध्यायेत् शुक्लाम्बरधरां हंसवाहनसंस्थिताम्
ततो मृत्युविनाशार्थं सालङ्कारां पयस्विनीम्
विप्राय वेदविदुषे गाञ्च दद्यात् सवत्सकाम्
अपमृत्युविनाशाय संसारार्णवतारिकाम् ।
विप्र तुभ्यमिमां रौद्रीं धेनुं सम्प्रददे स्वयम्
इति वाक्यविचारेण धेनुं दद्याद्द्विजातये ।
कुलीनाय सुशान्ताय रोगहीनद्विजाय वै
तदभावे चोदकुम्भं सवस्त्रं सहिरण्यकम् ।
औदुम्बरविधानेन सम्प्रदद्याद्द्विजातये ॥
तस्याप्यलाभे विप्रेन्द्र ! विप्राय स्वदुपानहौ
दद्यात् कार्त्तिकशुक्लायां द्वितीयायां विशेष
भ्रातिश्रेष्ठान् तथा वृद्धान् संपूज्य चाभिवाद
नारिकेलादिदानेन तोषयेत् स्वजनानपि ॥
ततः सोदरसम्पन्ना भगिनी याभवन्मुने ! ।
तस्या गृहं समागत्य श्रद्धानोऽभिराजयेत्
भद्रे भगिनि ! शुभगे त्वदङ्घ्रिसरसीरुहे ।
श्रेयसेऽद्य नमस्कर्त्तुमागतोऽहं तवालयम् ॥
इति श्रुत्वा भगिन्यादिः सोदरं विनयान्वित
मद्वाक्येस्ततस्तस्य पूजनं क्रियते महत् ॥
अद्य भ्रातृमती भ्रातस्त्वं नो वयसि बान्धव:
भोक्तव्यं भोऽद्य मद्गेहे त्वायुषे कुलदीपक !
कार्त्तिके शुक्लपक्षस्य द्वितीयायां सहोदरः
यमो यमुनया पूर्व्वं भोजितः स्वगृहेऽर्च्चितः
अस्मिन् दिने यमेनापि पूजिता भगिनी शु
स्वसुर्गृहे यो न भुङ्क्ते
यमद्वितीयादिनमेव लब्ध्वा ।
तं पापिनं सर्व्वसुराः प्रवृध्य
संसारमार्गे रटयन्ति विप्र ! ॥
तस्माद्भ्राता स्वसुर्गृहे भोक्तव्यं मासि कार्त्ति
शुक्लायाञ्च द्वितीयायां सर्व्वैश्वर्य्याय भो द्विज
वर्षे वर्षे च कर्त्तव्यं यशसि आयुषि श्रिये ।
ततः सम्प्राप्य सुमति भगिन्यै सुविधानतः ॥
सर्व्वालङ्कारवस्त्रादिदानसत्कारमादरात् ।
प्रदद्यान्मुनिशार्दूल प्रणम्यावनतः सुधीः ॥
स आशीषं प्रयच्छाशा नमस्कृत्य क्षमापये
सर्व्वा भगिन्यः सर्व्वोध्या ज्येष्ठानुक्रमशस्तदा
वस्त्रान्नपानसत्कारैर्भोजनैः पुष्टिवर्द्धनैः ।
करोत्येवं नरो विद्वान् याति यमयातनाम् ॥

अपमृत्युं न चाप्नोति सत्यं सत्यं हि नान्यथा ॥
येऽभिगम्य: सुवासिन्यो वस्त्रालङ्कारतोषिता: ।
न तेषां वत्सरं यावत् कलहो न रिपोर्भयम् ॥
व्रतस्यास्य प्रसादेन भूता: प्रेताश्च राक्षसा: ।
दूराद्वै पलायन्ते धर्म्मराजेन ताडिता: ॥
यो देवो महिषारूढो दण्डमुद्गरधारक: ।
वेष्टित: किङ्करैर्दण्डैस्तस्मै कालात्मने नम: ॥
इत्थं त्वं द्विजशार्दूल ! कुरुष्व तद्व्रतं शुभम् ।
रम्यं यमद्वितीयाख्यमपमृत्युनिवारणम् ॥
व्रतस्यास्य प्रभावेन पुत्त्रपौत्त्रसमन्वित: ।
सत्यं वदामि ते विप्र ! यशस्य: स्यात् सदैव हि ॥
गार्हस्थ्येन समो धर्म्मो न भूतो न भविष्यति ।
सन्देहोऽत्र न कर्त्तव्य इह लोके परत्र च ॥
ये वै यमद्वितीयाख्यं व्रतं कुर्व्वन्ति मानवा: ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥
अपुत्त्रो लभते पुत्त्रं धनहीनो लभेद्धनम् ।
भार्य्याहीनो लभेद्भार्य्यां सुरूपां कुलसम्भवाम् ॥
यस्यां तिथौ यमुनया यमराजदेव:
संभोजित: सकललोकनिपातदक्ष: ।
तस्यां भुनक्ति सुतिथौ च गृहे भगिन्या:
प्राप्नोति वित्तमतुलं स चिरायुरेव ॥”
इति पाद्मे उत्तरखण्डे १२५ अध्याय: ॥

यमधार:, पुं, ( यमा युग्मीभूता धारास्य । यद्वा, यमवत् विनाशिका धारा यस्य । ) पार्श्वद्वय-धारायुक्तास्त्रविशेष: । किरीच काटार इत्यादि भाषा ॥

यमनं, क्ली, ( यम् + भावे ल्युट् । ) बन्धनम् । उपरति: । इति मेदिनी । ने, १११ ॥ ( संयम: । यथा, हरिवंशे भविष्यपर्व्वणि । १६ । ४८ ।
“अस्युर्व्वांमनवामासि यतस्त्वं वामनाख्यया ।
मननान्मुनिरेवासि यमनाद्यतिरुच्यसे ॥” )

यमन:, पुं, (यमयति नियमयतीति । यम् + ल्यु: ।) यम: । इति मेदिनी । ने, १११ ॥ ( यमयति वशमानयतीन्द्रियग्राममिति । संयमकर्त्तरि, त्रि । यथा, वाजसनेयसंहितायाम् । ९ । २२ ।
“यन्तासि यमनो ध्रुवोऽसि धरुण: ।”
“यमन: स्वयं संयमनकर्त्ता भवसि ।” इति तद्भाष्ये महीधर: ॥ नियमकारिणि च त्रि । यथा, तत्रैव । १४ । २२ ।
“यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्री ।”
“यमनी सर्व्वेषां नियमकारिण्यसि ।” इति तद्भाष्ये महीधर: ॥ )

यमनिका, स्त्री, ( यच्छति आवृणोतीति । यम् + ल्यु: । कन् । टाप् । ) यवनिका । इत्यमरटीकायां रामाश्रम: ॥ कानात् इति भाषा ॥

यमपत्नी, स्त्री, ( यमस्य पत्नी । ) यमस्य भार्य्या । यमस्य द्वे भार्य्ये । धूमोर्णा १ विजया २ । इति जटाधर: ॥

यमप्रिय:, पुं, ( प्रीणातीति । प्री + क: । यमस्य प्रिय: । ) वटवृक्ष: । इति शब्दरत्नावली ॥

यमभगिनी, स्त्री, (यमस्य भगिनी स्वसा ।) यमुना । इति हेमचन्द्र: । ४ । १४९ ॥

यमराज:, पुं, (यमश्चासौ राजा चेति । “राजाह:सखिभ्यष्टच् ।” ५ । ४ । ९१ । इति टच् । ) यम: । इति हेमचन्द्र: । २ । ९९ ॥ अस्य पुर्य्यादि यथा,
“पुरी संयमनी तस्य चित्रगुप्तस्तु लेखक: ।
भृत्यौ चण्डमहाचण्डौ धूमोर्णाविजये प्रिये ।
विचारभूमिका नीचि: सहाया: कालपूरुषा: ॥”
इति जटाधर: ॥ * ॥
स च विमात्रा छायया शप्त: । ( यथा, मार्कण्डेये । ७७ । २५—२९ ।
“छायासंज्ञा त्वपत्येषु यथा स्वेष्वतिवत्सला ।
तथा न संज्ञाकन्यायां पुत्त्रयोश्चान्ववर्त्तत ॥
लालनाद्युपभोगेषु विशेषमनुवासरम् ।
मनुस्तत्क्षान्तवानस्या यमस्तस्या न चक्षमे ॥
ताडनाय च वै कोपात् पादस्तेन समुद्यत: ।
तस्या: पुन: क्षान्तिमता न तु देहे निपातित: ॥
तत: शशाप तं कोपात् छायासंज्ञा यमं द्विज ।
किञ्चित् प्रस्फुरमाणोष्ठी विचलत्पाणिपल्लवा ॥
पितु: पत्नीममर्य्यादं यन्मां तर्ज्जयसे पदा ।
भुवि तस्मादयं पादस्तवाद्यैव पतिष्यति ॥”)
तच्छापान्तं यथा,—
“स्वरूपधारिणीं चैमामानिनाय निजाश्रमम् ।
संज्ञां भार्य्यां प्रीतिमतीं भास्करो वारितस्कर: ॥
तत: पूर्व्वसुतो योऽस्या: सोऽभूद्वैवस्वतो मनु: ।
द्वितीयस्तु यम: शापाद्धर्म्मदृष्टिरभूत् सुत: ॥
कृमयो मांसमादाय पादतस्ते महीतलम् ।
पतिष्यन्तीति शापान्तं तस्य चक्रे पिता स्वयम् ॥
धर्म्मदृष्टियतश्चासौ समो मित्रे तथाहिते ।
ततो नियोगं तं याम्ये चकार तिमिरापह: ॥
यमुना च नदी जज्ञे कलिन्दान्तरवाहिनी ॥”
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरे । ७८ । २५—२९ ॥

यमराट्, [ज्] पुं, ( प्राणिसंयमनात् यमप्रभृतय: किङ्करास्तेषु राजते यमेन संयमेन राजते इति वा । राज् + क्विप् । इत्यमरटीकायां रघुनाथ: ।) यम: । इत्यमर: । १ । १ । ६६ ॥

यमलं, क्ली, (यमं लातीति । ला + क: ।) युग्मम् । इति हेमचन्द्र: । ६ । ६० ॥ ( त्रि, यमज: । यथा, देवीभागवते । ३ । २८ । ५ ।
“सुमित्रातनयौ जातौ यमलौ द्वौ मनोहरौ ।
ते जाता वै किशोराश्च धनुर्बाणधरा: किल ॥”)

यमलच्छद:, पुं, (यमलं यमलं छदमस्य । बहुव्रीहौ क: ।) अश्मन्तकवृक्ष: । कोविदारवृक्ष: । इति राजनिर्घण्ट: ॥

यमलार्ज्जुनहा, [न्] पुं, ( यमलार्ज्जुनौ हतवान् इति । हन् + क्विप् । ) श्रीकृष्ण: । इति हेमचन्द्र: ॥

यमलार्ज्जुनौ, पुं, ( यमलौ च तावर्ज्जुनौ चेति कर्म्मधारय: । ) गोकुलस्थार्ज्जुनवृक्षद्वयम् । तौ कुवेरपुत्त्रौ नलकूवरमणिग्रीवौ । नारदशापात् वृक्षतां गतौ श्रीकृष्णेन उद्धारितौ । यथा,—
“इमौ श्रीदपतेरस्य पुत्त्रौ भूत्वा तम:प्लुतौ ।
न विवाससमात्मानं विजानीत: सुदुर्म्मदौ ॥
अतोऽर्हत: स्थावरतां स्यातां नैवं यथा पुन: ।
स्मृति: स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥
वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते ।
वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यत: ॥
श्रीशुक उवाच ।
स एवमुक्त्वा देवर्षिर्गतो नारायणाश्रमम् ।
नलकूवरमणिग्रीवावासतुर्यमलार्ज्जुनौ ॥
ऋषेर्भागवतमुख्यस्य सत्यं कर्त्तुं वचो हरि: ।
जगाम शनकैस्तत्र यत्रास्तां यमलार्ज्जुनौ ॥
देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ।
तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥
इत्यन्तरेणार्ज्जुनयो: कृष्णस्तु यमयोर्ययौ ।
आत्मनिर्व्वेशमात्रेण तिर्य्यग्गतमुलूखलम् ॥
बालेन निष्कर्षतान्वगुलूखलं तत्
दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ।
निष्पेततु: परमविक्रमितातिवेप-
स्कन्धप्रवालविटपौ कृतचण्डशब्दौ ॥
तत्र श्रिया परमया ककुभ: स्फुरन्तौ
सिद्धावुपेत्य कुजयोरिव जातवेदा: ।
कृष्णं प्रणम्य शिरसाखिललोकनाथं
बद्धाञ्जली विरजसाविदमूचतु: स्म ॥
वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्म्मसु मनस्तव पादयोर्न: ।
स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टि: सतां दर्शनेऽस्तु भवत्तनूनाम् ॥
श्रीभगवानुवाच ।
तद्गच्छतं मत्परमौ नलकूवरसादनम् ।
संजातो मयि भावो वामीप्सित: परमोऽभव: ॥
श्रीशुक उवाच ।
इत्युक्तौ तं परिक्रम्य प्रणम्य च पुन: पुन: ।
बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥”
इति श्रीभागवते १० स्कन्धे १० अध्याय: ॥

यमली, स्त्री, ( यमल + स्त्रियां ङीष् । ) चोटिका-युग्मम् । इति मेदिनी । ले, १२६ ॥ चोटी घाटीपर्य्याये हेमचन्द्रेण गणिता सैव चोटिका ॥

यमवाहन:, पुं, (यमस्य वाहन: ।) महिष: । इति हेमचन्द्र: । ४ । ३४७ ॥ ( तथास्य पर्य्याय: ।
“महिषो घोटकारि: स्यात् कासरश्च रजस्वल: ।
पीनस्कन्ध: कृष्णकायो लुलापो यमवाहन: ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

यमव्रतं, क्ली, ( यमस्य धर्म्मराजस्येव व्रतम् । ) राजधर्म्मविशेष: । स तु पक्षपातं विना प्राणिनां शासनरूप: । इति पुराणम् ॥

यमस्वसा, [ऋ] स्त्री, ( यमस्य स्वसा भगिनी । ) यमुना । दुर्गा । इति मेदिनी । से, ६० ॥ (यदुक्तं हरिवंशे आर्य्यास्तवप्रकरणे । ५८ । ४ ।
“जया च विजया चैव तुष्टि: पुष्टि: क्षमा दया ।
ज्येष्ठा यमस्य भगिनी नीलकौशेयवासिनी ॥”)

यमानिका, स्त्री, ( यमानी + स्वार्थे कन् । ) यमानी । तत्पर्य्याय: । अजमोदा २ उग्रगन्धा ३ ब्रह्मदर्भा ४ । इत्यमर: । २ । ४ । १४५ ॥
“चत्वारि यमान्याम् । यमानी द्विविधा एका

वनयमानी या अजमोदा सैव ख्याता । अपरा यमानी सैव ख्याता गन्धविशेषात् दरोरपीति सुभूतिः । केचित्तु अजमोदादिदयं वनयमान्यां अजगन्धादिदयं यमान्यामित्याहुः । उग्रगन्धाजमोदाख्या ख्याता वनयमानिका इति । ‘यमानी दीपको दीप्यो भूतिकश्च यमानिका ।’ इति च रत्नः । यच्छति विरमति निवर्त्तते अग्निमान्द्यमनया यमानी । यमौ तु विरतौ मान्यौति अजट् ईप् यमानी स्वार्थे के यमानिका यमानी “पञ्चमवर्गपञ्चममध्या । यमानीति अन्तःस्थचतुर्थमध्या इति केचित् ।” इति भरतः ॥ * ॥ अस्या गुणाः । शूलमूलनाशित्वम् । रुच्यत्वम् । पित्ताधिकारित्वम् । वायुकफशमिकारित्वञ्च । इति राजवल्लभः ॥

यमानी, स्त्री, ( यच्छति विरमति निवर्त्तते अग्निमान्द्यमनयेति । यम + करणे ल्युट् । ङीप् । पृषोदरादित्वात् साधुः । ) यमानिका । इति शब्दरत्नावली ॥ (यथास्याः पर्य्यायः ।
“यमानी दीपको दीप्यो भूतिकश्च यमानिका ॥”
इति वैद्यकरत्नमालायाम् ॥ )

यमान्तकः, पुं, (यमस्यान्तकः । मृत्युञ्जयत्वादेवास्य तथात्वम् । ) शिवः । इति शब्दरत्नावली ॥ ( यमश्च अन्तकश्च तौ इति विग्रहे । वैवस्वतकालौ । यथा, महाभारते । २ । १७ । १५ ।
“तेजसा सूर्य्यसङ्काशः क्षमया पृथिवीसमः ।
यमान्तकसमः क्रोधे श्रिया वैश्रवणोपमः ॥”
“यमो वैवस्वतः अन्तकः कालः ।” इति तट्टीकायां नीलकण्ठः ॥ )

यमी, स्त्री, यमुनानदी । इति त्रिकाण्डशेषः ॥ ( यथा, श्रीमद्भागवते । ८ । १३ । ९ ।
“छायायां वडवामेके तासां संज्ञासुतास्त्रयः ।
यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु ॥”)

यमुना, स्त्री, ( यमयतीति । यमि + “अजियमिशीङ्भ्यश्च ।” उणा० ३ । ६१ । इति उनन् । टाप् । ) दुर्गा । यथा,—
“सर्व्वाणि हृदयस्थानि मङ्गलानि शुभानि च ।
ददाति चेप्सितान् लोके तेन सा सर्व्वमङ्गला ॥
सङ्गमात् गमनाद्गङ्गा लोके देवी विभाव्यते ।
यमस्य भगिनी जाता यमुना तेन सा मता ॥”
इति देवीपुराणे ४५ अध्यायः ॥ * ॥
( यच्छति विरमति गङ्गायामिति । ) नदीविशेषः । सा तु हिमालयदक्षिणदेशात्निःसृत्य प्रयागे गङ्गायां मिलिता । तत्पर्य्यायः । कालिन्दी २ सूर्य्यतनया ३ शमनस्वसा ४ । इत्यमरः ।१।१०।३२॥ तपनतनूजा ५ कलिन्दकन्या ६ यमस्वसा ७ श्यामा ८ तापी ९ कलिन्दनन्दिनी १० यमनी ११ यमी १२ । इति शब्दरत्नावली ॥ कलिन्दशैलजा १३ सूर्य्यसुता १४ । इति जटाधरः ॥ (यथा,—
“गङ्गा सरस्वती शोणयमुना सरयूः शची ।
सेवा इरावती नीला उत्तरात् पूर्व्ववाहिनी ॥”
इति हारीते प्रथमे स्थाने सप्तमेऽध्याये ॥)
अस्या जलगुणाः । पित्तदाहवमनश्रमापहत्वम् । स्वादुत्वम् । वातजननत्वम् । पावनत्वम् । वह्निदीपनकरत्वम् । रोचनत्वम् । बलप्रदत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ सा यमस्य भगिनी । यथा,—
“सावर्णिर्मेरुपृष्ठे तु तपो घोरं चकार ह ।
अद्यापि भविता लोके मनुः सावर्णिकेऽन्तरे ॥
भ्राता शनैश्चरश्चास्य मन्दत्वं स तु लब्धवान् ।
तयोर्यवीयसी या तु यमस्य यमलस्वसा ।
अभवत् सा सरिच्छ्रेष्ठा यमुना लोकपावनी ॥”
इति वह्निपुराणे सावर्णोपाख्यानम् ॥ * ॥
सा च वृन्दावने सुषुम्नाख्या परा शक्तिः । यथा,
श्रीभगवानुवाच ।
“इदं वृन्दावनं रम्यं मम धामैव केवलम् ।
अत्र ये पशवः साक्षाद्वृक्षाः कीटा नराधमाः ।
ये वसन्ति ममाधिष्ठे मृता यान्ति ममान्तिकम् ॥
अत्र या गोपपत्न्यश्च निवसन्ति ममालये ।
योगिन्यस्तास्तु एवं हि मम सेवाः परायणाः ॥
पञ्चयोजनमेवं हि वनं मे देहरूपकम् ।
कालिन्दीयं सुषुम्नाख्या परमामृतवाहिनी ॥”
इति पाद्मे पातालखण्डे ७ अध्यायः ॥ * ॥
अस्या जलस्य कृष्णवर्णत्वकारणं यथा,—
पुलस्त्य उवाच ।
“यदा दक्षसुता ब्रह्मन् ! सती याता यमक्षयम् ।
विनाश्य दक्षयज्ञं तं विचचार त्रिलोचनः ॥
ततो वृषध्वजं दृष्ट्वा कन्दर्पः कुसुमायुधः ।
अपत्नीकं तदास्त्रेण उन्मादेनाभ्यताडयत् ॥
ततो हरः शरेणाथ उन्मादेनाभिताडितः ।
विचचार तदोन्मत्तः काननानि सरांसि च ॥
स्मरन् सतीं महादेवस्तथोन्मादेन ताडितः ।
न शर्म्म लेभे देवर्षे बाणविद्ध इव द्विपः ॥
ततः पपात देवेशः कालिन्दीसरिते मुने ।
निमग्ने शङ्करे चापे दग्धा कृष्णत्वमागता ॥
तदाप्रभृति कालिन्द्या भृङ्गाञ्जननिभं जलम् ॥”
इति वामने ६ अध्यायः ॥ * ॥
ज्यैष्ठशुक्लद्वादश्यादिष्वस्यां स्नानपिण्डदानफलं यथा,—
“ज्यैष्ठामूलेऽमलद्वादश्यां स्नात्वा वै यमुनाजले ।
मथुरायां हरिं दृष्ट्वा प्राप्नोति परमां गतिम् ॥
यमुनासलिले स्नातः पुरुषो मुनिसत्तम ! ।
ज्यैष्ठामलामले पक्षे द्वादश्यामुपवासकृत् ॥
समभ्यर्च्याच्युतं सम्यक् मथुरायां समाहितः ।
अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ॥
ज्यैष्ठामले सिते पक्षे समभ्यर्च्य जनार्द्दनम् ।
धन्यो नः पिण्डनिर्व्वापं यमुनायां प्रदास्यति ॥”
इति विष्णुपुराणे ६ अंशे ८ अध्यायः ॥

यमुनाजनकः, पुं, ( यमुनाया जनकः । ) सूर्य्यः । इति हेमचन्द्रः । २ । ९ ॥

यमुनाभित्, [द्] पुं, ( यमुनां भिनत्तीति । भिद् + क्विप् । ) बलदेवः । इति हेमचन्द्रः । २।१३८ ॥ ( एतद्वृत्तान्तस्तूक्तं यथा, हरिवंशे । १०२ । २३—२६ ।
“स हलेनानताग्रेण कूले गृह्य महानदीम् ।
चकर्ष यमुनां रामो युवतिं वनितामिव ॥
सा विह्वलजलस्रोता ह्रदप्रस्थितसञ्चया ।
व्यावर्त्तत नदी भीता हलमार्गानुसारिणी ॥
लाङ्गलादिष्टमार्गा सा वेगगा वक्रगामिनी ।
सङ्कर्षणभयत्रस्ता योषिवाकुलतां गता ॥”)

यमुनाभ्राता, [ऋ] पुं, ( यमुनाया भ्राता । ) यमः । इत्यमरः । १ । १ । ६१ ॥

यमेरुका, स्त्री, (यमं ईरयति प्रेरयतीति । ईरि + बाहुलकात् उकः । टाप् । ) दक्कढक्का । इति त्रिकाण्डशेषः ॥

ययातिः, पुं, नहुषराजपुत्त्रः । तत्पर्य्यायः । नाहुषि २ । इति त्रिकाण्डशेषः ॥ नाहुषः ३ । इति जटाधरः ॥ तस्योपाख्यानं यथा,—
“नहुषस्य प्रवक्ष्यामि पुत्त्रान् सप्तैव धार्म्मिकान् ।
यतिर्ययातिः संयातिरुद्भवः पाचिरेव च ।
शर्य्यातिर्मेघयातिश्च सप्तैते वंशवर्द्धनाः ।
ययातिरकरोद्राज्यं धर्म्मैकशरणस्सदा ॥
शर्म्मिष्ठा तस्य भार्य्याभूत् दुहिता वृषपर्व्वणः ।
भार्गवस्यात्मजा तद्वद्देवयानी च सुव्रता ॥
ययातेर्द्देवयान्यान्तु पुत्त्रावजनयन्नृप ! ।
यदुश्च तुर्व्वसुश्चैव शक्रविष्णू इवापरौ ॥
तस्मादेव तु राजर्षेः शर्म्मिष्ठा वार्षपर्व्वणी ।
द्रुह्युञ्चानुञ्च पूरुञ्च त्रीन् कुमारानजीजनत् ॥
ततः काले च कस्मिंश्चिद्देवयानी शुचिस्मिता ।
ययातिसहिता राजन् जगाम रहितं वनम् ॥
ददर्श च तदा तत्र कुमारान् देवरूपिणः ।
क्रीडमानान् सुविस्रब्धान् विस्मिता चेदमब्रवीत् ॥
किन्नामधेयं गोत्रं वः पुत्त्रकाः ! ब्राह्मणः पिता ।
विब्रूत मे यथातथ्यं श्रोतुमिच्छामि तं ह्यहम् ।
तेऽदर्शयन् प्रदेशिन्या तमेव नृपसत्तमम् ॥
श्रुत्वा च तत्वतो देवी शर्म्मिष्ठामिदमब्रवीत् ।
ममाधीना सती कस्मादकार्षीर्विप्रियं मम ॥
शर्म्मिष्ठोवाच ।
यदा त्वया वृतो राजा वृत एव तदा मया ।
भर्त्ता हि मे पूज्यतमो राजर्षिः किं न वेत्थ तत् ।
शौनक उवाच ।
श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम् ।
राजन्नाद्येह वत्स्यामि विप्रियं मे त्वया कृतम् ।
अविद्रुवन्तीं किञ्चिच्च राजानं साश्रुलोचना ।
अचिरादेव संप्राप्ता काव्यस्योशनसोऽन्तिके ।
देवयान्युवाच ।
शर्म्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्व्वणः ।
त्रयोऽस्यां जनिताः पुत्त्रा राज्ञानेन ययातिना ।
दुर्भगाया मम द्वौ तु पुत्त्रौ तात ! ब्रवीमि वः ।
शुक्र उवाच ।
धर्म्मज्ञः सन् महाराज ! योऽधर्म्ममकृथाः प्रियम् ।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्ज्जया ।
ययातिरुवाच ।
ऋतुकामां स्त्रियं यस्तु गम्यां रहसि याचितः ।
नोपैति स च धर्म्मेषु भ्रूणहेत्युच्यते बुधैः ॥

...धर्म्मभयसंविग्नः शर्म्मिष्ठामुपजग्मिवान् ॥
...मो यौवनस्याहं हिंसयात्मा भस्मेव ! ।
...वाहं तव मे भगवन् जरेयं मा विशेत माम् ॥

शुक्र उवाच ।

...हं कथा मयोक्तं तत् जरां प्राप्तोऽसि भूमिप ! ।
...रां त्वेतां त्वमन्यस्मै संक्रामय यदीच्छसि ॥
...यो दास्यति पुत्रो वः स ते राजा भविष्यति ॥"

इति मात्स्ये ३२ अध्यायः ॥ * ॥

शौनक उवाच ।

...जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव हि ।
...ं ज्येष्ठं वरिष्ठञ्च यदुमित्यब्रवीद्वचः ॥
...ं यदो ! प्रतिपद्यस्व पाप्मानं जरया सह ।
...यौवनेन त्वदीयेन चरेयं विषयानहम् ॥
...ं वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
...त्वा सम्प्रतिपत्स्यामि पाप्मानं जरया सह ॥

यदुरुवाच ।

...न्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप ! ।
...रां ग्रहीतुं धर्म्मज्ञ ! पुत्रमन्यं वृणीष्व वै ॥

ययातिरुवाच ।

...ो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
...पाप्मानुषसम्बन्धात् दुष्प्रजा ते भविष्यति ॥
...र्वसो प्रतिपद्यस्व पाप्मानं जरया सह ।
...यौवनेन चरेयं वै विषयांस्तव पुत्रक ! ॥

तुर्व्वसुरुवाच ।

...कामये जरां तात ! कामभोगप्रणाशिनीम् ।
...रूपान्तकरणीं बुद्धिमानविनाशिनीम् ॥

ययातिरुवाच ।

...त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
...मात् प्रजा समुच्छेदं तुर्व्वसो ! तव यास्यति ॥
...ह्यो ! त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् ।
...रां वर्षसहस्राणि यौवनं स्वं प्रयच्छ च ॥

द्रुह्युरुवाच ।

...गजं न रथं चाश्वं जीर्णो भुङ्क्ते वराङ्गनाम् ।
...रोगश्चास्य भवति तां जरां ते न कामये ॥

ययातिरुवाच ।

...त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
...मात् द्रुह्यो ! प्रियः कामो न ते सम्पत्स्यते

क्वचित् ॥

...णो ! त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
...ं वर्षसहस्रन्तु चरेयं यौवनेन ते ॥

अनुरुवाच ।

...ः शिशुरिवादत्ते कालेऽन्नमशुचिर्यथा ।
...जुहोति च कालेऽग्निं तां जरां नैव कामये ।

ययातिरुवाच ।

...ं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
...रादोषस्त्वयोक्तो यस्तस्मात्त्वं प्रतिपत्स्यसे ॥
...! मे त्वं प्रियः पुत्र ! त्वं वरीयान् भविष्यसि ।
...जरस्तोऽप्यनघः प्राणान् च कामोऽस्मि यौवने ।
...! त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
...त्कालं चरेयं वै विषयान् वयसा तव ।
... वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
...व प्रतिपत्स्यामि पाप्मानं जरया सह ॥

शौनक उवाच ।

एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा ।
यथात्थ त्वं महाराज ! तत् करिष्यामि ते वचः ॥

ययातिरुवाच ।

पूरो ! प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते ।
सर्व्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥"

इति मात्स्ये ३३ अध्यायः ॥ * ॥

शौनक उवाच ।

"पौरवेणाथ वयसा ययातिर्नहुषात्मजः ।
प्रीतियुक्तो नरश्रेष्ठश्चचार विषयान् सुखी ॥
पूरुं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ।
पूरो ! प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौ-

वनम् ॥

राज्यञ्चापि गृहाणेदं यत् त्वयोपकृतं पुरा ॥

शौनक उवाच ।

एवं स नाहुषो राजा ययातिः पुत्रमीप्सितम् ।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः ॥
उषित्वा वनवासं स ब्राह्मणैः सह संश्रितः ।
फलमूलाशनो दान्तो यथा स्वर्गमितो गतः ॥"

इति मात्स्ये ३५ अध्यायः ॥ * ॥

ययीः, पुं (यायते प्राप्यते भक्तैरिति । या + "यापोः कित् द्वे च" । उणा० ४ । १५८ । इति ईः द्वित्वञ्च ।) महादेवः । इत्युणादिकोषः । २ । ३५४ ॥ (याति द्रुतं गच्छतीति । अश्वः । इत्युज्ज्वलदत्तः ॥)

ययुः, पुं, (यातीति । या + "यो द्वे च ।" उणा० १ । २२ । इति उः द्वित्वञ्च । यजत्यनेनेति । यज + उः । पृषोदरादित्वात् जस्य यत्वमित्यमरटीकायां रघुनाथः ।) अश्वमेधीयाश्वः । सामान्यघोटकः । इति मेदिनी । ये, ४७ ॥

यवः, पुं, (यूयते अन्यया इति । यु मिश्रणे + अप् ।) स्वनामख्यातशूकधान्यम् । तत्पर्य्यायः । सितशूकः २ । इत्यमरः । २ । ९ । १५ ॥ शितशूकः ३ । इति शब्दरत्नावली ॥ मेध्यः ४ दिव्यः ५ अक्षतः ६ कञ्चुकी ७ धान्यराजः ८ तीक्ष्णशूकः ९ तुरगप्रियः १० शक्तुः ११ महेष्टः १२ पवित्रधान्यम् १३ । तस्य गुणाः । कषायत्वम् । मधुरत्वम् । सुशीतलत्वम् । प्रमेहपित्तकफापहारकत्वञ्च । अमूकस्तु कषवगुणाः । बलप्रदत्वम् । रूक्षत्वम् । रूक्षं बहुवीर्य्यपुष्टिदत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।

"यवः कषायमधुरो बहुवातशकृद्गुरुः ।
रूक्षः स्थैर्य्यकरः शीतो मूत्रमेदकफापहः ॥"

इति राजवल्लभः ॥ * ॥

(अपि च ।

"यवः कषायो मधुरो हिमश्च
कटुर्विपाके कफपित्तहारी ।
व्रणेषु पथ्यस्तिलवच्च नित्यं
प्रबद्धमूत्रो बहुवातवर्चाः ॥
स्थैर्य्याग्निमेधा स्वरवर्णकृच्च
स पिच्छिलः स्थूलविलेखनश्च ।
मेदो मरुत्तृड्हरणोऽतिरूक्षः
प्रसादनः शोणितपित्तयोश्च ॥
एभिर्गुणैर्हीनतरास्तु किञ्चिद्-
विद्याद्यवेभ्योऽतियवान् विशेषैः ॥"

इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥

"रूक्षः शीतो गुरुः स्वादुर्बहुवातशकृद्यवः ।
स्थैर्य्यकृत् सकषायस्तु बल्यः श्लेष्मविकारनुत् ॥
रूक्षः कषायानुरसो मधुरः कफपित्तहा ।
मेदःक्रिमिविषघ्नश्च बल्यो वेणुयवः स्मृतः ॥"

इति चरके सूत्रस्थाने २७ अध्याये ॥

"कचिद्वाक्यशेषादपि शास्त्रार्थः यथा यवपदस्य कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारादेकमात्रशक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वात् यवमयश्चरुर्भवतीति श्रुतौ यवपदस्यार्थं सन्देहे ।

'वसन्ते सर्व्वशस्यानां जायते पत्रशातनम् ।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥'

इति विध्यर्थाकाङ्क्षया प्रवर्त्तमानाद्वाक्यशेषाद्दीर्घशूक एव यवपदस्य शास्त्रार्थः ।" इति शब्दशक्तिप्रकाशिकायां नैमित्तिकसंज्ञायाम् ॥ * ॥ हविष्ये यवानामेव मुख्यत्वम् । यथा,—

"हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादिसर्व्वालाभेऽपि वर्जयेत् ॥"

इति कात्यायनसंहिता । ९ । १० ॥

नवयवागमे तैरवश्यं श्राद्धं कार्य्यं अकरणे प्रत्यवायश्रवणात् । यथा,—

"नवसस्यविपाकेषु दुरस्य प्रावलोकने ।
इच्छाश्राद्धानि कुर्व्वीत नवसस्यागमे तथा ॥

इति विष्णुपुराणात् वचनान्तरवचनैश्च नवान्नश्रुतेः नवान्नागमत्वेनैव निमित्तं नाथवात् । अमावस्यास्तिथोऽष्टका माघी प्रौष्ठपद्यूर्द्धं तथा- ष्टयोदश्यो व्रीहियवपाकौ च ।

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥"

इति श्राद्धतत्त्वे नवान्नश्राद्धे ॥ )

परिमाणविशेषः । स तु चतुर्धान्यमानरूपः । इति शुभङ्करः ॥ षट्सर्षपपरिमाणात्मकश्च । यथा,—

"जालान्तरगते भानौ यत्राणु दृश्यते रजः ।
तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भिश्च सर्षपः ।
षट्सर्षपैर्यवस्त्वेको गुञ्जैका तु यवैस्त्रिभिः ॥"

इति शब्दचन्द्रिका ॥ * ॥

अङ्गुलिस्थयवाकाररेखाविशेषः । यथा,—

"तर्ज्जनीमूलसंप्रष्ठौ यवौ पुत्रार्थदौ क्रमात् ।
मध्यमायां यवश्चैवाङ्गुष्ठेऽपूर्व्वधनप्रदः ॥"

अपि च सामुद्रके ।

"मध्यमायां यदि यवो दृश्यते च शुभाननः ।
तदाभ्यर्चितं द्रव्यं प्राप्नोत्यङ्गुष्ठके यवे ॥
यस्यापि चक्रमङ्गुष्ठे यवपूर्वं च दृश्यते ।
तदा पितामहादीनामर्ज्जितं लभते धनम् ॥"

(पूर्व्वपक्षः । यथा, वाजसनेयसंहितायाम् । १४ । ३१ । "यवाभिं शतास्तु वत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतय आसन् ।" "यवाः पूर्व्वपक्षाः अयवाः अपरपक्षाः ।" इति तट्टीकायां महीधरः ॥ )

यवकः, पुं (यवप्रकारः। यव+"स्थूलादिभ्यः प्रकारवचने कन्।" ५।४।३। इति कन्।) यवः। इत्यमरटीकायां रामाश्रमः॥ (यथा,—
"यवका हायनाः पांशुवाप्यनैषधकादयः।
शालीनां शालयः कुर्व्वन्त्यनुकारं गुणा गुणैः॥"
इति चरके सूत्रस्थाने २७ अध्याये॥)

यवक्यं, त्रि, (यवकानां भवनं क्षेत्रमिति। यवक+"यवयवकषष्टिकाद्यत्।" ५।२।३। इति यत्।) यवभवनोचितक्षेत्रम्। इत्यमरः।२।९।७॥

यवक्षारः, पुं, (यवजातः क्षारः। शाकपार्थिववत् समासः।) क्षारविशेषः। यथा,—
"नरसारयवक्षारस्फटिकारित एव काचवकयन्त्रैः।
वडवः पाच्यं सत्त्वं तद्धि महाद्रावकनाम॥"
इति रसावली॥
तत्पर्य्यायः। यवाग्रजः २ पाक्यम् ३। इत्यमरः।२।९।१०८॥ यवनालः ४ यवशूकः ५ सारकः ६ रेचकः ७ यवनालकः ८। इति शब्दरत्नावली॥ यावशूकः ९ क्षारः १० तर्ज्जः ११ तीक्ष्णरसः १२ यवनालजः १३ इति रत्नमाला॥ यवजः १४ यवशूकजः १५ यवाह्वः १६ यवापत्यम् १७। अस्य गुणाः। कटुत्वम्। उष्णत्वम्। कफवातोदरार्त्तिनाशित्वम्। आमशूलाश्मकृच्छ्रविषदोषहरत्वम्। सरत्वञ्च। इति राजनिर्घण्टः॥ अर्शःश्वासगुल्माग्रहणीपाण्डुशोथानाहगलामयनाशित्वञ्च। इति राजवल्लभः॥ (तथा च।
"पाक्यः क्षारो यवक्षारो यवशूको यवाग्रजः।
यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः॥
निहन्ति शूलवातामश्लेष्मश्वासगलामयान्।
पाण्ड्वर्शोग्रहणीगुल्मानाहप्लीहहृदामयान्॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

यवक्षोदः, पुं, (यवानां क्षोदः।) यवचूर्णम्। तत्पर्य्यायः। चिक्कसः २। इति हेमचन्द्रः॥

यवगण्डः, पुं, (यूनां गण्डः स्फोटकः। पृषोदरादित्वात् यवादेशः।) युवगण्डः। इति शब्दरत्नावली॥ वयस्फोड़ा इति भाषा॥

यवजः, पुं, (यवाज्जायते इति। जन्+डः।) यवक्षारः। इति रत्नमाला॥ (यथास्य पर्य्यायः।
"यावशूको यवक्षारो यवशूको यवाग्रजः।
क्षारस्तीक्ष्णस्तीक्ष्णरसो यवजो यवनालजः॥"
इति वैद्यकरत्नमालायाम्॥)
यवानी। इति राजनिर्घण्टः॥

यवजोद्भवं, क्ली, (यवजादुद्भवोऽस्य।) तवक्षीरम्। इति राजनिर्घण्टः॥

यवतिक्ता, स्त्री, लताप्रभेदः। शङ्खिनीति यवेची इति च ख्याता। (यथा, सुश्रुते सूत्रस्थाने ४५ अः।
"यवतिक्तातैलं सर्व्वदोषप्रशमनमीषत्तिक्तम्।
अग्निदीपनं लेखनं मेध्यं पथ्यं रसायनञ्च॥")
तत्पर्य्यायः। महातिक्ता २ हट्पादविसर्पिणी ३ नाकुली ४ नेत्रमीना ५ शङ्खिनी ६ पत्रतण्डुली ७ तण्डुली ८ अक्षपीड़ा ९ कृष्णपुष्पी १० यशस्विनी ११ माहेश्वरी १२ तिक्तपत्रा १३ यावी १४ तिक्ता १५। अस्या गुणाः। सतिक्तात्वम्। दीपनत्वम्। रुचिकारित्वम्। क्रिमिकुष्ठविषव्रणासदोषनाशित्वम्। रेचनत्वञ्च। इति राजनिर्घण्टः॥

यवतैलं, क्ली, (यवनिर्म्मितं तैलम्।) यवचूर्णादियुक्तपक्वतैलविशेषः। तत्प्रकारं गुणश्चाह।
"यवचूर्णार्द्धकुडवं मञ्जिष्ठार्द्धपलेन तु।
तैलप्रस्थः शतगुणे काञ्जिके साधितो जयेत्।
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षणम्॥"
इति सुखबोधः॥

यवद्वीपः, पुं, (यवनामा द्वीपः इति मध्यपदलोपिकर्म्मधारयः।) उपद्वीपविशेषः। यावा इति भाषा। यथा,—
"यत्नवन्तो यवद्वीपं सप्तराज्योपशोभितम्।
सुवर्णरूप्यकं द्वीपं सुवर्णकरमण्डितम्॥"
इति वाल्मीकीये रामायणे किष्किन्ध्याकाण्डे ४० सर्गः॥*॥ "अतः परं यत्नवन्तो भूत्वा सप्तराज्योपशोभितं यवद्वीपं तथा सुवर्णद्वीपं विचेतव्यमिति शेषः। सुवर्णकरमण्डितमिति सुवर्णं कुर्व्वन्ति ये तैः शोभितम्।" इति रामायणतिलकनामतट्टीका॥

यवनः, पुं, देशविशेषः। (यथा, मात्स्ये।१२०।४३।
"तान् देशान् प्लावयन्ति स्म म्लेच्छप्रायांश्च सर्व्वशः।
सशैलान् कुकुरान् रौध्रान् वर्व्वरान् यवनान् खसान्॥")
वेगः। वेगाधिकाश्वः। इति मेदिनी॥ गोधूमः। गर्ज्जरत्वम्। तुरुष्कः। इति राजनिर्घण्टः॥ (यौति मिश्रीभवतीति। यु+"जुयुवृञ्भ्यो युच्।" उणा० २। ७४। इति युच्।) जातिविशेषः। इति शब्दरत्नावली॥ स तु यवनदेशोद्भवययातिराजपुत्रतुर्व्वसुवंशः। यथा,—
"यदोस्तु जाता यदवस्तुर्व्वसोर्यवनाः सुताः।
द्रुह्योस्तु तनया भोजा अनोस्तु म्लेच्छजातयः।
पूरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव!॥"
इति मात्स्ये ३४ अध्यायः॥*॥
सगरराजेनैषां सर्व्वशिरोमुण्डनं सर्व्वधर्म्मराहित्यञ्च कृतं ते चात्मधर्म्मपरित्यागात् म्लेच्छत्वं ययुरिति विष्णुपुराणोक्तत्वात् यवनः मोसलमानेङ्गरेजोभयजातिवाचकः। यवनशब्दश्चवर्गतृतीयादिरिति रघुनन्दनभट्टाचार्य्येण लिखितम्॥ यवनादीनान्तु सर्व्वधर्म्मराहित्यमुक्तं हरिवंशे यथा,—
"सगरस्तां प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत्।
यवनानां शिरः सर्व्वं काम्बोजानान्तथैव च॥
पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना॥
शका यवनकाम्बोजाः पारदाः पह्लवास्तथा।
कोलिसर्पाः समहिषा दार्व्वाश्चोलाः सकेरलाः॥
सर्व्वे ते क्षत्रियास्तात धर्म्मस्तेषां निराकृतः।" (continued) वशिष्ठवचनाद्राजन्! सगरेण महात्मना॥"
शकानां शकदेशोद्भवानां क्षत्रियाणां एव... नादीनामिति। अत्र यवनशब्दस्तद्देश... वाची चवर्गतृतीयादिः। यवनो देशवि... रिति त्रिकाण्डशेषाभिधानदर्शनात्। म्लेच्छत्वमप्युक्तं विष्णुपुराणे। तथा ... जवनादीनुपक्रम्य। ते चात्मधर्म्मपरित्या... म्लेच्छत्वं ययुरिति। बौधायनः।
"गोमांसखादको यश्च विरुद्धं बहु भाषते।
सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते॥"
इति प्रायश्चित्ततत्त्वम्॥
यवनादीनां राज्यकालो यथा,—
"सप्त गर्द्दभिनश्चापि शकाश्चाष्टादश स्मृता...
यवनाष्टौ भविष्यन्ति तुषाराश्च भविष्यति॥
अष्टौ ते यवना राज्यं वर्षाणां परिसङ्ख्यया
भोक्ष्यन्त्यशीति तच्च येऽपि गर्द्दभिनः स्मृत...
शतानि त्रीणि वर्षाणां दशशीतीनि शतानि
शकानां राज्यकालः स्यादृषिभिर्निश्चयो गत...
शतस्यार्द्धं चतुर्णाञ्च वर्षाणां राज्यभागिन...
मरुत्तानां सुताः काला अष्टिन् भोक्ष्यन्ति...
मरुत्ता यवनैः सार्द्धं तथान्ये म्लेच्छसम्भवाः
भोक्ष्यन्ति राज्यं प्राप्येषु भविष्ये तद्विधारित...
शतानि त्रीणि वर्षाणां मौण्डा राज्यभुजः स्मृता...
अन्नन्ति पार्व्वतीयास्तु द्वे शते परिसङ्ख्यया।
शताद्वैमन्यच्च तथा राज्यं भोक्ष्यन्ति ते नृप...
सप्तषष्टिस्तु वर्षाणि दशातीवाहृतः स्मृताः।
तेषु च्छन्नेषु कालेषु ततः किलकिला नराः
भविष्यन्तीह यवना धर्म्मतः कामतोऽर्थतः
तैर्विमिश्रा जनपदा आर्य्या म्लेच्छाश्च सर्व्व...
विपर्य्ययेण वर्त्तन्ते जनयिष्यन्ति वै प्रजाः॥
लुब्धानिष्टवरश्चैव भवितारस्तदा नृपाः।
तेषां व्यतीते पर्य्याये बहुवर्षयुगास्तदा॥
राजानः संप्रणश्यन्ति कालेन महता ततः...
कल्किना ताड़िताः सर्व्वे आर्य्या म्लेच्छाश्च सर्व्वशः
अधार्म्मिकाश्च ये सर्व्वे पापकाश्चैव सर्व्वशः
कुष्टे नृपतिशब्दे वै सन्ध्यांशे च वै कलौ।
इति ब्रह्माण्डपुराणे ३९ अध्याय...
मुनिविशेषः। यथा,—
"जातं दिने दूषयति वशिष्ठ-
श्चाष्टौ च गर्गो यवनो दशाहम्।
जन्माख्यमासं किल भागुरिश्च
प्रति विवाहे क्षुरकर्म्मणी॥"
इति तिथ्यादितत्त्वम्॥*
कालयवनोत्पत्तिर्यथा,—
श्रीपराशर उवाच।
"गार्ग्यं गोष्ठे द्विजं स्यालः षण्ढ इत्युक्तवान् द्वि...
यदूनां सन्निधौ सर्व्वे जहसुर्यादवास्तदा॥
ततः कोपसमाविष्टो दक्षिणापथमेत्य सः।
सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम्॥

सुखाख्यो वलयश्चैव इत्यभेदाः सुदुर्ज्जयः ।
अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः ॥
अतिक्रान्तश्च पक्षाभ्यां मयोऽन्यस्तु विपर्य्ययः ।
स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्द्धगः ॥
द्विगुणान्तेऽतिक्रान्तपक्षोऽन्योऽस्य विपर्य्ययः ।
द्विचतुर्द्दण्ड इत्येवं ज्ञेया लक्षणतः क्रमात् ॥
गोमूत्रिकाहिसञ्चारी शकटो मकरस्तथा ।
भोगभेदाः समाख्यातास्तथा परिपतन्तकः ॥
दण्डपक्षो युगोरस्यः शकटस्तद्विपर्य्ययः ।
मकरो व्यत्ययोर्ज्ञश्च शेषः कुञ्जरराजिभिः ॥
मण्डलव्यूहभेदौ च सर्व्वतोभद्रदुर्ज्जयौ ।
अष्टानीको द्वितीयस्तु प्रथमः सर्व्वतोमुखः ॥
अर्द्धचन्द्रक ऊर्द्धारो वज्रो भेदास्त्वसंहतेः ।
तथा कर्कटशृङ्गी च काकपादी च गोधिका ॥
त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः ।
इति व्यूहाः समाख्याता व्यूहभेदप्रयोक्तृभिः ॥
एते सप्तदश प्रोक्ता दण्डव्यूहाश्च पञ्चधा ।
तथा व्यूहद्वयञ्चैव मण्डलस्य प्रयोक्तृभिः ॥
असंहतास्तु षड्व्यूहा भोगव्यूहाश्च पञ्चधा ।
व्यूहभेदेषु प्रयोज्याः स्युर्युद्धकाल उपस्थिते ॥
पक्षादीनामथैकेन हत्वा शेषं परिक्षिपेत् ।
उरसा च समाहृत्य कोटिभ्यां परिवेष्टयन् ॥
परकोटिसुपक्रम्य पक्षाभ्यामप्रतिग्रहः ।
कोटिभ्यां जघने हन्यादुरसा च प्रपीडयेत् ॥
एवं व्यूहप्रयत्नेन यत्नवानवनीपतिः ।
विदारयेद्व्यूहजातं बलेन द्विषतां बलम् ॥" )

व्यूहनं, क्ली, ( वि+ऊह+ल्युट् । ) सैन्यसंस्थानम् । विपूर्व्वोहधातोरनट्प्रत्ययेन निष्पन्नमिदम् ॥ (मेलनम् । यथा, भागवते ।३।२६।३६।
"चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ॥"
"व्यूहनं मेलनं तृणादेः ।" इति तट्टीकायां स्वामी ॥ व्योभके, त्रि । यथा, हरिवंशे । १२६ । ३६ ।
"परं गुह्येभ्यः पृश्निगर्भस्वरूपं
यशः शश्वद्व्यूहनं कान्तरूपम् ॥"
"व्यूहनं जगत्क्षोभकम् ।" इति तट्टीकायां नीलकण्ठः ॥)

व्यूहपार्ष्णिः, पुं, ( व्यूहस्य पार्ष्णिः । ) व्यूहपश्चाद्भागः । तत्पर्य्यायः । प्रत्यासारः २ । इत्यमरः ॥ प्रत्यासरः ३ । इति तट्टीका ॥ व्यूहस्य पश्चाद्व्यूहान्तरम् । इति केचित् । इति भरतः ॥ व्यूहमध्यम् । इति शब्दरत्नावली ॥

व्येञ, ञ ऐ वृतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-उभ०-सक०-अनिट् । ) ञ, व्ययति व्ययते । ऐ, व्येयात् । इति दुर्गादासः ॥

व्योकारः पुं, लौहकारः । इत्यमरः ॥

व्योम, [ न् ] क्ली, ( व्येञ् ञ वृतौ+"नामन् सीमन्निति ।" उणा० ४ । १४६ । इति निपातनात् साधुः । यद्वा, "विपूर्व्वादवतेर्व्वाभिप्रायेत्वात् औणादिके 'सर्व्वधातुभ्यो मनिन् ।' इति सर्व्वेषां मनिन्प्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।' इत्यूठि गुणः । व्यवति व्याप्नोति सर्व्वं जगत् । यद्वा व्यवतिर्गत्यर्थः भावे मन् व्योम । अवनं गमनं विविधमस्मिन् विद्यते । यद्वा दृष्यार्थः विशेषेणावति प्राणिनोऽवकाशप्रदानेन । उणादौ तु नामन् सीमन् व्योमन् इत्यादिना वेञ् संवरणे इत्यस्मान्मनिनि ऊत्वं निपात्यते । दीयते तद्वायुना व्योम । तथाच निरुक्तम् योनिरन्तरिक्षं महानवयवः परिवीतो वायुना इति ।" इति निघण्टुटीका । १ । ३ । ३ ।) आकाशः । इत्यमरः ॥ (यथा, रघुः । ४।२६ ।
"रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्व्वन् व्योमेव भूतलम् ॥")
जलम् । भास्करस्यार्च्चनाश्रयः । इति मेदिनी ॥ अभ्रकम् । इति राजनिर्घण्टः ॥

व्योमकेशः, पुं, ( व्योम एव केशा यस्य । विराट्मूर्त्तित्वादस्य तथात्वम् । ) शिवः । इत्यमरः ॥ ( यथा, महाभारते । ७ । २०० । १२६ ।
"सूर्य्याचन्द्रमसौ लोके प्रकाशन्ते रुचश्च याः ।
ते केशसंज्ञितास्त्वक्षे व्योमकेश इति स्मृतः ॥")

व्योमकेशी, [ न् ] पुं, महादेवः । गङ्गाधारणकाले व्योमव्यापिनः केशा अस्य सन्तीति व्योमकेशशब्दात् इनप्रत्ययेन निष्पन्नमेतत् ॥

व्योमचारिपुरं, क्ली, ( व्योमचारि आकाशगामि पुरम् । ) शौभपुरम् । इति भूरिप्रयोगः ॥

व्योमचारी, [ न् ] पुं, ( व्योम्नि चरतीति । चर+णिनिः । ) देवता । पक्षी । इति मेदिनी ॥ चिरजीवी । द्विजातः । इति विश्वः ॥ (आकाशचारिणि, त्रि । यथा, कथासरित्सागरे । २२ । ५६ ।
"अस्ति पूर्व्वमहं व्योमचारी विद्याधरोऽभवम् ॥")

व्योमधूमः, पुं, ( व्योम्नः धूमः । ) मेघः । इति त्रिकाण्डशेषः ॥

व्योमनासिका, स्त्री, भारतीपक्षी । इति त्रिकाण्डशेषः ॥

व्योममञ्जरं, क्ली, (व्योम्नः मञ्जरमिव ।) पताका । इति त्रिकाण्डशेषः ॥

व्योममण्डलं, क्ली, ( व्योम्नः मण्डलम् । ) पताका । इति शब्दरत्नावली ॥ आकाशश्च ॥

व्योममुद्गरः, पुं, ( व्योम्नः मुद्गर इव । ) निर्घातः । इति हारावली ॥

व्योमयानं, क्ली, (व्योमगामि यानम् ।) विमानम् । इत्यमरः ॥

व्योमस्थली, स्त्री, भूमिः । इति भूरिप्रयोगः ॥ ( व्योम्नः स्थली । ) नभःस्थलञ्च ॥

व्योमाभः, पुं, (व्योम्ना शून्येन आभातीति । आ+भा+कः ।) बुद्धः । इति त्रिकाण्डशेषः ॥

व्योमोदकं, क्ली, (व्योम्नः उदकम् ।) दिव्योदकम् । इति राजनिर्घण्टः ॥

व्योषं, क्ली, ( विशेषेण ओषतीति । उष दाहे+पचाद्यच् ।) त्रिकटु । इत्यमरः ॥ (यथा, सुश्रुते । १ । ४४ ।
"व्योषं त्रिफलां तथा विडङ्गान्यथो तथा ।")

व्रज, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) व्रजति । इति दुर्गादासः ॥

व्रज, ञ संस्कृतौ । गतौ । इति कविकल्पद्रुमः ॥ ( चुरा०-पर०-सक०-सेट् । ) ञ, व्राजयति । विरेफौ तौ । तौ स्तौ विरेफौ रेफरहितौ च स्याताम् । इति दुर्गादासः ॥

व्रजं, क्ली, व्रजनम् : गमनम् । व्रज गतौ इत्यस्मात् घप्रत्ययेन निष्पन्नमिदम् । इति सिद्धान्तकौमुदी ॥

व्रजः, पुं, ( व्रज गतौ+"गोचरसंचरेति ।" ३ । ३ ।११९ । इति घप्रत्ययेन निपातनात् साधुः ।) समूहः । इत्यमरः ॥ ( यथा, महाभारते । १ । १४९ । १२ ।
"ततः प्रतापः सुमहान् शब्दश्चैव विभावसोः ।
प्रादुरासीत् तदा तेन बुबुधे स जनव्रजः ॥")
गोष्ठम् । ( यथा, माघे । २ । ६४ ।
"नितान्तनीवधासारप्रसारा गा इव व्रजम् ।
उपयन्त्यस्य दृष्टार्थाः पुरीं माहिष्मतीं द्विषः ॥")
पन्थाः । इति मेदिनी ॥ अयन्तु मथुरायोजनव्याप्य[illegible]निर्द्देशः । अस्य विवरणं यथा, माद्मे ।
"व्रजमण्डलभूगोलं शेषनागफणं वरम् ।
कुसुराख्यं महाश्रेष्ठं सर्व्वेषां मध्यसंस्थितम् ।
तस्योपरिस्थितं लोकं सर्व्वश्रेष्ठं महावनम् ।
कृष्णलीलाविहारार्थं सुसम्यक्परिराजितम् ।
चतुरस्रक्रोशेन परिपूर्णविराजितम् ।
अस्य प्रदक्षिणीकुर्व्वन् धनधान्यसुखं लभेत् ।
दानार्थं वासतो लोको विष्णुलोकमवाप्नुयात् ।
आवासान्म्रियते येन पुनर्जन्म न विद्यते ।
पुण्यं कल्पगुणं लब्ध्वा सतेऽस्मिन् व्रजमण्डले ।
रुद्रेण निर्म्मितास्तीर्थाः सार्द्धद्वयसहस्रकाः ॥"
तन्मध्ये वनोपवनप्रतिवनाधिवनान्यष्टचत्वारिंशत् तानि चतुरस्रक्रोशपरिमाणस्थितानि चतुर्भागशोऽभ्यन्तरस्थितानि क्रमश आह । पाद्मे ।
"वनानि द्वादशान्यात्युर्यमुनोत्तरदक्षिणे ।
महावनं महाश्रेष्ठं १ द्वयं काम्यवनं शुभम् २ ।
कोकिलाख्यं तृतीयञ्च ३ तूर्य्यं तालवनं तथा ४ ।
पञ्चमं कुमुदाख्यञ्च ५ षष्ठं भाण्डीरसंज्ञकम् ६ ।
नाम्ना छत्रवनं श्रेष्ठं सप्तमं परिकीर्त्तितम् ७ ।
अष्टमं खदिरं प्रोक्तं ८ नवमं लोहजं वनम् ९ ।
नाम्ना भद्रवनं श्रेष्ठं दशमं बहुपुष्पकम् १० ।
एकादशं समाख्यातं बहुलावनसंज्ञकम् ११ ।
नाम्ना बिल्ववनं श्रेष्ठं द्वादशं कामनाशनम् १२ ।
इति द्वादशसंख्यानि वनानि शुभदानि च ॥"
इति द्वादशवनानि ।
अथ द्वादशोपवनान्याह वाराहे ।
"आद्यौ ब्रह्मवनं नाम १ द्वितीयं अप्सरा-
वनम् २ ।
तृतीयं विह्वलं नाम [illegible] चतुर्थकम् ।
नाम्ना कदम्बवनं श्रेष्ठं पञ्चमं परिकीर्त्तितम् ।
सुरभीवननामानं [illegible] ।
[illegible]

मधुरवनवासानमष्टमं परिकीर्त्तितम् ८ ।
मार्त्तेिश्वरवनं श्रेष्ठं नवमं माधवप्रियम् ९ ।
हिवसाविवनं श्रेष्ठं दशमं पापनाशनम् १० ।
एकादशं समाख्यातं नारदाख्यं शुभोदितम् ११ ।
द्वादशं परमानन्दवनं सर्व्वार्थदायकम् १२ ।
इति द्वादशसंख्यानि वनान्युपवनानि च ।”
इति द्वादशोपवनानि ॥ ● ॥

अथ द्वादशप्रतिवनानि । भविष्ये ।
“आदौ रङ्कवनं श्रेष्ठं पुरसंख्याविराजितम् १ ।
वार्त्तावनं द्वितीयञ्च २ करहाख्यं तृतीयकम् ३ ।
चतुर्थं काम्यनामानं वनं कामप्रदं शुभम् ४ ।
चमज्जननामानं पञ्चमं कौतुभप्रदम् ५ ।
नाम्ना कर्णवनं श्रेष्ठं षष्ठं सम्प्रवरप्रदम् ६ ।
कृष्णक्षिपणकं नाम वनं सप्तममीरितम् ७ ।
नन्दप्रेक्षणकृष्णाख्यं वनं नन्दनमष्टमम् ८ ।
लक्ष्मिन्द्रवनं नाम नवमं लक्ष्मीपूजितम् ९ ।
शिवावनं शुभं प्रोक्तं दशमं नन्दभावितम् १० ।
चन्द्रावलीवनं श्रेष्ठमेकादशसुराञ्चितम् ११ ।
नाम्ना लोहवनं श्रेष्ठं द्वादशं शुभदं शुभम् १२ ।
इति प्रतिवनान्याहुर्मार्गे वामे च दक्षिणे ।
इति द्वादशसंख्यानि देवानामपरप्रदाः ॥”
इति द्वादश प्रतिवनानि ॥ ● ॥

अथ द्वादशाधिवनानि । विष्णुपुराणे ।
“मथुरा प्रथमं नाम १ राधाकुण्डं द्वितीयकम् २ ।
नन्दग्रामं तृतीयञ्च ३ गूढ़स्थानं चतुर्थकम् ४ ।
पञ्चमं ललिताग्रामं ५ वृषभानुपुरञ्च षट् ६ ।
सप्तमं गोकुलं स्थान-७ मष्टमं बलदेवकम् ८ ।
गोवर्द्धनवनं श्रेष्ठं नवमं कामनाप्रदम् ९ ।
वनं जाववटं नाम दशमं परिकीर्त्तितम् १० ।
वृन्दावनं श्रेष्ठमेकादशं प्रकीर्त्तितम् ११ ।
वंशीवटकं स्थानं वनं द्वादशं कीर्त्तितम् १२ ।
इति द्वादशसंख्यानि वनान्यधिवनानि च ।
वनानामधिपाः प्रोक्ता व्रजमण्डलमध्यगाः ।
एषां मैव विलोकेन वनयात्रा च निष्फला ।
एषाञ्च दर्शनेनैव वनयात्रा शुभप्रदा ।
आदौ लीलां यदा पश्चाद्वनयात्रां ततश्चरेत् ।
सर्व्वान् कामानवाप्नोति विष्णुलोकमवाप्नुयात् ।
सर्व्वत्र विजयी भूयाद्वनयात्राप्रभावतः ।”
इति व्रजभक्तिविलासे १ अध्यायः ॥

व्रजकः, पुं, नपस्वी । इति शब्दरत्नावली ॥

व्रजकिशोरः, पुं ( व्रजस्य किशोरः । ) श्रीकृष्णः । स तु द्वादशाधिवनान्तर्गतललिताग्रामाधिवनाधिपो देवः । “अथ ललिताग्रामाधिपव्रजकिशोरमन्त्रः । यथा गौतमीयतन्त्रे । ॐ श्रौं ललिताग्रामाधिवनाधिपतये व्रजकिशोराय नमः । इत्येकविंशाक्षरो व्रजकिशोरमन्त्रः । अनेन मन्त्रेण प्राणायामः । अस्य मन्त्रस्य विभाण्डक ऋषिर्व्रजकिशोरो देवता गायत्री छन्दः मम सकलपापक्षयद्वारा शुभफलप्राप्त्यर्थे विनियोगः । शिरसि विभाण्डकाय नमः मुखे व्रजकिशोराय नमः हृदि गायत्री-च्छन्दसे नमः । अथ ध्यानम् ।
‘ललिताद्युतं शान्तं सर्व्वैस्तु सखिभिर्वृतम् ।
ध्यायेन्नित्यं किशोरूपस्थं महारासजलोत्सवम् ।’
इति ध्यात्वा यथाशक्ति जपं कृत्वा गुह्यातीत्या-दिना जपं समर्पयेत् । इति ललिताग्रामाधिप-व्रजकिशोरमन्त्रः ।” इति व्रजभक्तिविलासे १ अध्यायः ॥

व्रजनाथः, पुं, ( व्रजस्य नाथः । ) श्रीकृष्णः । इति पुराणम् ॥

व्रजभूः, पुं, ( व्रजे भूरुत्पत्तिर्यस्य । ) केलिकदम्बः । इति शब्दचन्द्रिका ॥ ( व्रजस्य भूर्भूमिः । ) व्रजभूमौ, स्त्री । व्रजजाते, त्रि ॥

व्रजमण्डलं, क्ली, ( व्रजस्य मण्डलम् ।) व्रजभूमिः । यथा, मात्स्ये ।
“व्रजमण्डलभूगोलं षोडशगणपदं वरम् ।
कुशस्थाख्यं महाश्रेष्ठं सर्व्वेषां मध्यसंस्थितम् ।”
इति व्रजविलासे १ अध्यायः ॥

व्रजमोहनः, पुं, ( व्रजान् व्रजवासिनो मोहयतीति । मुह + णिच् + ण्वुल् ।) श्रीकृष्णः । इति पुराणम् ॥

व्रजवरः, पुं, ( व्रजे वरः श्रेष्ठः । ) श्रीकृष्णः । स तु द्वादशाधिवनान्तर्गतजाववटाधिवनाधिपो देवः । “अथ जाववटाधिवनाधिपव्रजवरमन्त्रः । गौतमीये ।
‘वटावृक्षैः समन्तात्तु सघनं वनमाश्रितम् ।
तमेवाधिवनं ख्यातं वटसेवापरायणम् ।
तस्मिन्मध्ये वटं श्रेष्ठं कृष्णक्रीड़ावरप्रदम् ।
वटावृक्षैर्वनं ख्यातं मध्ये चैव वटं स्मृतम् ।
वटं दृष्ट्वं स्थितं तत्र वटसंज्ञं विधीयते ।
वटजावानुसारेण वटलिङ्गानि दर्शयेत् ।’
वटस्थानलिङ्गम् । ॐ ठः जाँ वटाधिवनाधिपतये व्रजवराय नमः । इत्येकोनविंशाक्षरो जाववटाधिवनाधिपव्रजवरमन्त्रः । अनेन मन्त्रेण प्राणायामः । अस्य मन्त्रस्य वल्मीक ऋषि-र्जाववटाधिपो व्रजवरो देवता पङ्क्तिश्छन्दः मम सकलसौभाग्यसम्पत्फलप्राप्त्यर्थे जपे विनियोगः । न्यासं पूर्व्ववत् । अथ ध्यानम् ।
‘नानालङ्कारभूषाढ्यं राधासख्यं मनोहरम् ।
ध्यायेद्युगलमूर्त्तिञ्च वनयात्रावरप्रदम् ।’
इति ध्यात्वा यथाशक्ति जपं कृत्वा गुह्यातीत्या-दिना जपं समर्पयेत् । इति जाववटाधिवनाधिपव्रजवरमन्त्रः ।” इति व्रजभक्तिविलासे १ अध्यायः ॥

व्रजवल्लभः, पुं, ( व्रजानां व्रजवासिनां वल्लभः प्रियः । ) श्रीकृष्णः । इति पुराणम् ॥

व्रजाङ्गना, स्त्री, ( व्रजस्य अङ्गना । ) गोपी । यथा, छन्दोमञ्जर्य्याम् ।
“विलासवंशध्वनिवं सुखानिले:
प्रपूर्य्य यः पञ्चमरागमुद्गिरन् ।
व्रजाङ्गनानामपि गानशालिनां
जहार मानं स हरिः पुनात वः ।”

व्रज्या, स्त्री, (व्रजनमिति । व्रज गतौ + “व्रजयजो-र्भावे क्यप् ।” ३ । ३ । ९८ । इति क्यप् । ) पर्य्यटनम् । जिगीषोः प्रयाणम् । गमनम् । इत्यमरः ॥ वर्गः । इति मेदिनी ॥ ( समानजातीयानामेकत्र सन्निवेशः । यथा, साहित्यदर्पणे । ६ । ५६५ ।
“कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोहरः ।”)
रङ्गः । इति धरणिः ॥

व्रण, शब्दे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-अक०-सेट् । ) व्रणति । इति दुर्गादासः ॥

व्रण, त् क अङ्गचूर्णे । इति कविकल्पद्रुमः ॥ ( अदन्त चुरा०-पर०-सक०-सेट् । ) अङ्गचूर्णः अङ्गभेदः । व्रणयति गात्रं वाणेन भटः । इति दुर्गादासः ॥

व्रणः, पुं क्ली, ( व्रणयति गात्रमिति । व्रण अङ्गचूर्णे + पचादित्वात् अच् ।) क्षतम् । तत्पर्य्यायः । ईर्म्मम् २ अरुः ३ । इत्यमरः ॥ ईर्म्मः ४ । इति तट्टीका ॥ ( यथा, रघुः । १२ । ५५ ।
“स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम् ।
आत्मनः सुमहत् कर्म्म व्रणैरावेद्य संस्थितः ॥”)
अथ व्रणाधिकारः ।
“व्रणो द्विधा परिज्ञेयो दोषजागन्तुभेदतः ।
दोषजो दुष्टदोषैः स्यादन्यः शस्त्रादिसम्भवः ॥”
तत्र वातिकस्य लक्षणमाह ।
“स्तब्धः कठिनसंस्पर्शो मन्दस्रावी महारुजः ।
तुद्यते स्फुटितप्रायो व्रणो मारुतसम्भवः ॥”
स्तब्धः अचलः ॥ ● ॥ पैत्तिकमाह ।
“तृष्णामोहज्वरक्लेददाहदुःखावदारकैः ।
व्रणं पित्तकृतं विद्यात् स्रावैर्गन्धैश्च पूतिकैः ।”
क्लेद आर्द्रता । दुःखं यथाक्रमम् । अवदारणं व्रणे विदारणवत् पीड़ा ॥ ● ॥ श्लैष्मिकमाह ।
“बहुपिच्छो गुरुः स्निग्धस्तिमितो मन्दवेदनः ।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः ।”
बहुपिच्छः बहुपिच्छिलः । अल्पसंक्लेद ईषदार्द्रः ॥ ● ॥ रौधिरं द्वन्द्वजं सान्निपातिकमाह ।
“रक्तो रक्तस्रुती रक्तात् द्विजः स्यात्तदन्वयः ।”
तदन्वयः द्विविदोषलिङ्गसमन्धः ॥ ● ॥ शुद्धव्रणलिङ्गमाह ।
“जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः ।
सुव्यवस्थो निरस्रावः शुद्धव्रण इति स्मृतः ।”
जिह्वातलाभः तलशब्दोऽत्र अनल्पार्थः । तेन जिह्वावद्रक्तः । सुव्यवस्थः उच्चनतारहितः ॥ दुष्टव्रणलिङ्गमाह ।
“पूतिपूयातिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितिः ।
दुष्टव्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्य्ययः ।”
उत्सङ्गी कोटरवान् । अतिगन्धादिः आदिशब्देन स्रावैरनतिवर्णतादयः संग्रहणे ॥ ● ॥ संरोहव्रणस्य लिङ्गमाह ।
“कपोतवर्णप्रतिमा यस्या तान्तोदवर्जिताः ।
स्थिराश्च पिडकावन्तो रोहन्तीति तमादिशेत् ।”

"व्रणाश्च मेलानि विभावयेच्च
लिङ्गानि मर्म्मस्वपि ताडितेषु ।"
वक्ष्यं शिरादीनां विद्धानां यानि लिङ्गानि पृथगुक्तानि लिङ्गानि चकारात् भ्रमप्रलापादीनि च मर्म्मस्वपि शिरादिषु ताडितेषु विद्धेषु। विभावयेत् जानीयात् ॥ * ॥ सर्व्वव्रणानामुपद्रवानाह ।
"विसर्पपक्षघातश्च शिरास्तम्भोऽपतानकः ।
मोहोन्मादौ व्रणे पीडा ज्वरस्तृष्णा हनुग्रहः ॥
कासश्छर्द्दिरतीसारो हिक्का श्वासः सवेपथुः ।
षोड़शोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ।"
अथाग्निदग्धस्य निदानमाह ।
"तत्राग्निर्द्विविधो ज्ञेयः स्निग्धरूक्षः समाश्रितः ।
स्नेहस्तु तैलादि रूक्षं लौहादि कथ्यते ।"
अग्निदग्धं चतुर्व्विधमाह ।
"अग्निदग्धं चतुर्द्धा स्यात् प्लुष्टं दुर्दग्धमेव च ।
सम्यग्दग्धं तथा तीव्रदग्धञ्च परिकीर्त्तितम् ।"
तेषां लक्षणमाह ।
"यद्विवर्णमतिप्लुष्टं तत् प्लुष्टमभिधीयते ।
तीव्रदाहो यथावन्तो यत्र स्फोटा भवन्ति हि ।
चिरेण ते प्रशाम्यन्ति तद्दुर्दग्धमुदाहृतम् ॥
तालवर्णमगम्भीरं दाहपीड़ासमन्वितम् ।
सुसंस्थितञ्च कथितं सम्यग्दग्धं भिषग्वरैः ॥
अवलम्बं यत्र दग्धं स्याद्विश्लेषो वपुषस्तथा ।
शिरास्नायुस्थिसन्धीनां तं वदन्त्यतिदग्धकम् ॥
चतुर्थं वेदना दाहो ज्वरस्तृष्णामूर्च्छया सह ।
स्यादग्निस्तु चिरादग्नोऽपि रूढ़ो याति विवर्णताम् ।" * ॥
अथ व्रणस्य चिकित्सा ।
"आदौ शोथहरो लेपस्ततस्तु परिषेचनम् ।
विम्लापनमथस्वेदोऽपक्वस्य तत्र स्यादुपनाहनम् ॥
पाचनं भेदनं पश्चात् पीड़नं शोधनं तथा ।
रोपणं वर्णकरणं व्रणस्येते क्रमाः स्मृताः ॥"
क्रमाश्चिकित्साः । सुश्रुतेषु व्रणस्य षष्टिरुपक्रमा लिखिताः सन्ति । ते सर्व्वेऽत्र विस्तरभयान्न लिखिताः ॥ * ॥ तत्रादौ शोथहरं लेपमाह ।
"यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम् ।
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं व्रणम् ॥
नीलपूरजटाश्चिञ्चा देवदारु महौषधम् ।
रास्नाग्निमन्थौ लेपोऽयं वातशोथविनाशनः ॥ *
मधुकं चन्दनं दूर्व्वा नलमूलञ्च पद्मकम् ।
उशीरं बालकं पद्मं लेपोऽयं पित्तशोथहा ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
सर्पिष्कैः प्रदेहः स्याच्छोथे पित्तसमुद्भवे ॥ * ॥
आजगन्धे रक्तजे च लेप एषोऽभिपूजितः ।
अजगन्धाश्वगन्धा च मञ्जिष्ठा सरलस्तथा ।
एकैषिकाश्मगन्धा च लेपोऽयं श्लेष्मशोथहा ॥"
अजगन्धा मेढ़ाशृङ्गी । एकैषिका श्यामानिशोथः ।
"शम्पाकपिप्पल्याकं शिशुत्वक् शिकता शिवा ।
मूत्रपिष्टः सुखोष्णोऽयं प्रलेपः श्लेष्मशोथहा ॥ * ॥

न रात्रौ लेपनं दद्याद्दत्तं च पतितं तथा ।
न च पर्य्युषितं शुष्यमाणं तत्रैव धारयेत् ॥"
दत्तं दत्तमेव पुनर्न दद्यात् । पतितं शीर्य्यमाणं यदङ्गात् पतितम् । पर्य्युषितं लेपनद्रव्यकल्कीकृतं यत् पर्य्युषितम् ।
"तमसा पिहितो शुष्मा रोमकूपमुखे स्थितः ।
विना लेपेन निर्य्याति रात्रौ नालेपयेदतः ॥
रात्रावपि प्रलेपस्तु विधातव्यो विपश्चिद्भिः ।
अपाकिशोथे गम्भीरे रक्तपित्तसमुद्भवे ।" * ॥
अथ परिषेचनमाह ।
"यथाम्बुभिः सिच्यमानः शान्तिमग्निर्हि गच्छति ।
दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥"
तद्यथा,—
"वातघ्नौषधनिक्वाथैस्तैलैर्मांसरसैः शृतैः ।
उष्णैः संसेचयेत् शोथं वातिकं काञ्जिकेन तु ॥
पित्तरक्ताभिघातोत्थं शोथं सिञ्चेत्तु शीतलैः ।
क्षीराज्यमधुशर्करेक्षुरसैः पित्तहरैः शृतैः ॥
कफघ्नौषधनिःक्वाथैरशीतैः परिषेचयेत् ।
तैलक्षाराम्बुमूत्रैश्च शोथं श्लेष्मसमुद्भवम् ॥" * ॥
अथ विम्लापनमाह ।
"स्तब्धस्य कठिनस्यास्य कार्य्यं विम्लापनं शनैः ।"
अथ शोथस्य विम्लापनस्य विधिमाह । सुश्रुतः ।
"अभ्यज्य स्वेदयित्वा तु वेणुनाड्या शनैः शनैः ।
विमर्द्दयेद्भिषङ्मन्दं तलेनाङ्गुष्ठकेन वा ॥"
वेणुनाड्या स्वेदयित्वा उष्णस्वेदं कृत्वा ॥ * ॥
रक्तमोक्षणमाह ।
"वेदनोपशमार्थाय तथा पाकशमाय च ।
अचिरोत्पतिते शोथे शोणितस्रावणञ्चरेत् ॥"
चरेत् कुर्य्यात् ।
"एकतस्तु क्रियाः सर्व्वा रक्तमोक्षणमेकतः ।
रक्तं हि वेदनामूलं तच्चेन्नास्ति न चापि रुक् ॥
विवर्णे कठिने श्यावे व्रणे चात्यन्तवेदने ।
सविशेषे विशेषेण जलौकोभिः घटैरपि ॥"
शोणितस्रावणञ्चरेदित्यनेनान्वयः ॥ * ॥
अथोपनाहस्वेदमाह । तस्य विधिर्भेषजसाधनप्रकरणे कथित एवास्ति ।
"रुजावतां दारुणानां कठिनानां तथैव च ।
शोथानां स्वेदनं कार्य्यं ये चाप्येवं विधा व्रणाः ॥"
शोथानां वामान्यानां व्रणाः व्रणशोथाः तेषामपि स्वेदनं कार्य्यम् ।
"शोथयोरुपनाहन्तु दद्यादामविदग्धयोः ।
प्रशाम्यत्यविदग्धस्तु विदग्धः पाकमेति च ॥"
अविदग्धः आमः । विदग्धः पाकोन्मुखः । स यथा,—
"दशमूली वला दारु वाजिगन्धा प्रसारिणी ।
मूलं पलञ्च वातारिश्चिन्दुवारपुनर्नवाः ॥
शोभाञ्जनः कणा चापि सैन्धवं चिञ्चिणीदलम् ।
शृङ्गवेरप्रवशूकर्णौ तसी च कुलत्थिका ॥
तिला यवाश्च विहगाः कुठेरो मूलकं निशिः ।
अथापामार्गमूलैश्च एरण्डकल्कैः संयुतैः ॥
काञ्जीकतैः सक्षीरेश्च स्वेदैर्विविधवर्द्धनैः ।
अनेन प्रशमं याति वातशोथो न संशयः ॥"

दशमूलादिरुपनाहः ।
"पुनर्नवा दारु शुण्ठी शिग्रुः सिद्धार्थ एव च ।
अम्लपिष्टः सुखोष्णोऽयं प्रलेपः सर्व्वशोथहा ॥"
पुनर्नवादिः ॥ * ॥
अथ पाचनमाह ।
"न प्रशाम्यति यः शोथः प्रलेपादिविधानतः ।
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ॥"
पाचनद्रव्याण्याह ।
"शणमूलकशिग्रूणां फलानि तिलसर्षपाः ।
अतसीसक्तवः किण्वमुष्णद्रव्याश्च पाचनम् ॥"
शणफलादीनामतसीसक्तवः सक्तवः कर्त्तव्याः । किण्वं सुरावीजम् । यवगोधूममाषादिप्रकारः अन्यश्चोष्णद्रव्यं व्रणस्य पाचनं भवति ॥ * ॥
अथ भेदनमाह ।
"अन्तःपूयेषु वक्रेषु तथैवोत्सङ्गवत्स्वपि ।
गतिमत्स्वथ रोगेषु भेदनं संप्रयुज्यते ॥"
उत्सङ्गवत्सु कोटरवत्सु । गतिमत्सु नाड़ीव्रणेषु । भेदनं शस्त्रमौषधकर्म्म च ॥ * ॥ तत्र शस्त्रेण भेदनमाह ।
"रोगे व्यधनसाध्ये तु यथोद्देशं प्रमाणतः ।
शस्त्रं विधाय दोषन्तु स्रावयेत् कथितं यथा ॥"
शस्त्रकर्म्मनिषेधापवादमाह ।
"बालवृद्धासहक्षीणभीरूणां योषितामपि ।
व्रणेषु मर्म्मजातेषु भेदनं द्रव्यलेपनम् ॥"
तत्र भेदमाह ।
"चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः ।
कपोतकङ्कगृध्राणां मलं लेपेन दारणम् ॥"
चिरविल्वः करञ्जः । अग्निकः भल्लातकः ।
"भल्लातकास्थकल्कं तु रक्तचन्दनमिष्यते ।"
हयमारकः करवीरः । दारणं भेदनम् ।
"क्षारद्रव्यं तथा क्षारो दारणः परिकीर्त्तितः ।"
क्षारद्रव्यं अपामार्गादि । क्षारः सर्जिका यवक्षारादिः ।
"हस्तिदन्तो जले पिष्टो बिन्दुमात्रः प्रलेपतः ।
अत्यन्तकठिने शोथे कथितो भेदनः परः ॥" * ॥
अथ पीड़नमाह ।
"पूयगर्भानणूद्वारान् व्रणान् मर्म्मगतानपि ।
यथोक्तैः पीड़नद्रव्यैः समन्तात् परिपीड़येत् ॥"
पीड़नद्रव्याण्याह ।
"द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीड़येत् ।
यवगोधूममाषाणां चूर्णानि च समासतः ॥
शुष्यमाणमुपेक्षेत प्रलेपं पीड़नं प्रति ।
न चापि मुखमालिम्पेत्तथा दोषः प्रसिच्यते ॥"
पीड़नं प्रति पीड़नद्रव्यलेपं प्रति । पीड़नद्रव्यलेपे शुष्यन्तमपि धारयेदित्यर्थः । तथा व्रणस्य मुखे लेपं विना प्रसिच्यते स्रवति ॥ * ॥
अथ शोधनमाह ।
"व्रणस्य त्वविशुद्धस्य काथः शुद्धिकरः परः ।
पटोलनिम्बपत्रस्य सर्व्वथैव प्रयुज्यते ॥
वातिके दशमूलानां क्षीरिणां पैत्तिके व्रणे ।
आरग्वधादेः कफजे कषायः शोधने हितः ॥

"वपनं नैव नारीणां नानुव्रज्याजपादिकम् ।
न गोष्ठे शयनं तासां न च दध्यान्नवाजिनम् ॥
सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
एवमेव तु नारीणां मुण्डमुण्डनमादिशेत् ॥"
इति गोवधप्रकरणे विवेचितम् ।
"प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ।
पूर्ब्बं गृहीत्वा सङ्कल्पं प्रमादान्नाचरेद्यदि ।
जीवन् भवति चण्डालो मृत: श्वा चाभि-
जायते ॥"
इति प्रायश्चित्तविवेकधृतवचनम् ॥
देवल: ।
"सर्व्वभूतभयं व्याधि: प्रमादो गुरुशासनम् ।
अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रत: ॥"
भर्त्तुरनुज्ञया स्त्रीणां व्रतकरणे न दोष: । तथाच
भर्त्तुरनुज्ञया व्रतोपवासनियमेज्यादीनामभ्यास:
स्त्रीधर्म्म इति संवत्सरप्रदीपधृतशङ्खवचनात् ॥
अथ कथाश्रवणमाह देवीपुराणम् ।
"तद्दानं तज्जप: ज्ञानं तत्कथाश्रवणादिकम् ।
उपवासकृतो ह्येते गुणा: प्रोक्ता मनीषिभि: ॥"
अथ व्रतप्रतिष्ठाविधि: ।
श्रीभगवानुवाच ।
"गोपथारामसेतूनां मठसंक्रमवेश्मनाम् ।
नियमव्रतलक्ष्याणां प्रतिष्ठां शृणु सत्तम ॥
शास्त्रीय विधिना वह्निं समाधाय विचक्षण: ।
शिलां पूर्णघटं कांस्यं सम्भवे स्थापयेद्बुध: ॥
श्रपन् सर्व्वं समासाद्य श्रपयेद्यवमयं चरुम् ।
क्षीरेण कपिलायास्तु तद्विष्णोरिति साधक: ॥
प्रणवेनाभिघार्य्याथ दर्व्यां संघट्टयेत् तत: ।
साधयित्वावतार्य्याथ तद्विष्णोरिति होमयेत् ॥
व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् ।
विष्णुतच्चक्षुरित्युक्त्वा वेदाद्यैर्होमयेत्तथा ॥
ॐ भूरग्नये स्वाहा । ॐ सूर्य्याय स्वाहा । ॐ
प्रजापतये स्वाहा । ॐ अन्तरीक्षाय स्वाहा ।
ॐ द्यौ: स्वाहा । ॐ ब्रह्मणे स्वाहा । ॐ
पृथिव्यै स्वाहा । ॐ महाराजाय स्वाहा ।
ॐ सोमं राजानमिति जुहुयात् । ॐ लोक-
पालेभ्य: स्वाहा । स्वस्वमन्त्रैर्जुहुयाद्ग्रहेभ्यश्च ।
एवं हुत्वा चरोर्भागं दद्यात् दशदिशां बलिम् ।
तत: पलाशसमिधा जुहेदष्टोत्तरं शतम् ॥
आज्यन्तु जुहुयात् पश्चादेभिर्मन्त्रैर्द्विजोत्तम: ।
तत: पुरुषसूक्तेन मन्त्रेराज्यन्तु होमयेत् ॥
इरावतीति जुहुयात् तिलान् घृतपरिप्लुतान् ।
हुत्वा च ब्रह्मविष्ण्वीशदेवानामनुयायिनम् ॥
ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुन: ।
पर्व्वतानां नदीनाञ्च समुद्राणां तथैव च ॥
हुत्वा व्याहृतिभिर्दद्यात् स्रुचा पूर्णाहुतित्रयम् ।
वौषडन्तेन मन्त्रेण वैष्णवेन सुरोत्तम ॥
पञ्चगव्यञ्च संप्राश्य दद्यादाचार्य्यदक्षिणाम् ।
तिलपात्रं हेमयुक्तं सवत्सां गामलङ्कृताम् ।
प्रीयतां भगवान् विष्णुरित्युत्सृजेद्व्रतं नर: ॥ * ।
आरामं कारयेद्यस्तु नन्दने स चिरं वसेत् ।
मठप्रदानात् सर्व्वोऽपि प्राप्नोति पुरुष: सदा ।
सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानव: ।
प्रपादानादाम्बुवस्य लोकमाप्नोत्यसंशयम् ॥
संक्रमाणान्तु य: कर्त्ता दुर्गतिं तरते नर: ।
स्वर्गलोके च निवसेत् इष्टकासेतुकृत्तथा ॥
गोमार्गस्य तथा कर्त्ता गोलोके क्रीडते चिरम् ।
नियमव्रतकृद्याति विष्णुलोकं नरोत्तम: ॥
लक्ष्यकृत् स्वर्गमाप्नोति सर्व्वपापविवर्ज्जित: ।
अनेन विधिना मर्त्य: संपूर्णं फलमाप्नुयात् ॥ * ॥
इयं प्रतिष्ठा सामान्या सर्व्वसाधारणात्मन ।
कर्त्तव्या देशिकेन्द्रैस्तु प्रतिष्ठा यत्र विद्यते ॥
इति संक्षेपत: प्रोक्त: समुदायविधिस्तव ।
सर्व्वेषामेव वर्णानां सर्व्वकामफलप्रद: ॥
सर्व्ववृत्तेषु कर्त्तव्या प्रतिष्ठा विधिना बुधै: ।
फलार्थिभिरप्रतिष्ठं यस्मान्निष्फलमुच्यते ॥"
इति हयशीर्षे समुदायप्रतिष्ठापटल: ॥ * ॥
शास्त्रीय वैदिकेन स्वगृह्योक्तविधिनेति यावत् ।
शिलेति उदूखलोपलक्षणम् । कांस्यं अग्निप्रण-
यनार्थम् । कांस्येन अग्निप्रणयनमाह । गृह्या-
संग्रहे ।
"शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद्-
बुध: ॥
तस्याभावे सरावेण नवेनाभिमुखञ्च तम् ।
सर्व्वत: पाणिपादान्त: सर्व्वतोऽक्षिशिरोमुख: ।
विश्वरूपो महानग्नि: प्रणीत: सर्व्वकर्म्मसु ॥"
एवञ्चाग्निप्रणयनानन्तरं सर्व्वत इत्यस्य पाठो
युक्त: । प्रणीत इति मन्त्रलिङ्गात् । अन्यथा
स्थापनानन्तरं एतद्विधानं व्यर्थं स्यात् ॥ * ॥
अत्र च पाकाङ्गत्वात् साहसनामानमग्निमाह
गृह्यासंग्रह: ।
"प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहस: ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा ।
आहूय चैव होतव्यं यत्र यो विहितोऽनल: ॥"
प्रायश्चित्ते होमकर्म्मवैगुण्यसमाधानार्थं प्राय-
श्चित्तात्मकमहाव्याहृतिहोमादौ । तथा च
छन्दोगपरिशिष्टम् ।
"यत्र व्याहृतिभिर्होम: प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेया: स्त्रीपाणिग्रहणे यथा ॥
अपि वाज्ञातमित्येषा प्राजापत्यापि वाहुति: ।
होतव्या निर्विकल्पोऽयं प्रायश्चित्तविधि:
स्मृत: ॥"
अत्र निर्विकल्प इत्यभिधानात् सामगानां भव-
देवभट्टोक्तशाट्यायनहोमो निष्प्रामाणिक: ।
अथासुकाम इहागच्छागच्छ इत्युचार्य्य यथा-
भावे व्रीह्यादिभिरपि होम: ।
"हविष्येषु यवा मुख्यास्तदनु व्रीहय: स्मृता: ।
माषकोद्रवगौरादीन् सर्व्वाभावे विवर्ज्जयेत् ॥
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालय: ॥"
इति छन्दोगपरिशिष्टात् ॥
तत्र गोभिलेन अथ हविर्निर्व्वपति व्रीहीन्
यवान् वा कांस्ये चरुस्थाल्यां वा अमुष्मै त्वा
जुष्टं निर्व्वपामीति देवतानामोद्देश: । सकृद्-
यजुषा द्विस्तूष्णीमित्यनेन निर्व्वाप[illegible]
वामनेव तन्मात्रं कर्त्तव्यम् । अत्र च [illegible]
त्वा जुष्टं निर्व्वपामीत्यनेन यजुषा सकृन्नि[illegible]
धानात् [illegible]
कर्त्तव्या । तत्र छन्दोगपरिशिष्टम् ।
"देवतासंख्यया ग्राह्या निर्व्वापाश्च पृथक् पृथक् ।
तूष्णीं द्विरेव ग्रहीयाद्धोमश्चापि पृथक् पृथक् ।
अत्र देवतासंख्यया पृथक् पृथक् निर्व्वाप[illegible]
अनुनिर्व्वापक्रमेणैव । होमोऽपि पृथक् [illegible]
णेवेति । आज्यस्थालीपुरुषदोषेण यद्येतन्[illegible]
वेनापि मन्त्रेण निर्व्वापादिकं समाचर[illegible]
याज्ञिका: ।
"धाते न्यूने तथा च्छिन्ने सान्नाय्ये मान्त्रिके
तथा ।
यत्र मन्त्रा: प्रयोक्तव्या मन्त्रा यज्ञार्थसाधका: ।"
इत्युक्ते: । मान्त्रिके मन्त्रमाध्ये अवघातादौ [illegible]
तत्कार्य्ये मन्त्रपाठाभावे मन्त्रा: प्रयोक्तव्या: ।
कपिलाया अभावे अन्यधेनोरपि हुतेन सम्भव[illegible]
तद्विष्णोरित्यनेनाभिघार्य्य दर्व्या दक्षिणावर्त्त[illegible]
संमिश्रयेत् । दर्व्वी च प्रादेशप्रमाणा द्व्यङ्गुल[illegible]
विस्तारा ग्राह्या ।
"इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं वाग्रे च पृथ्वग्रमवदानक्रियाक्षमम् ।
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे ।
दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनञ्च मेक्षणम् ।"
इति छन्दोगपरिशिष्टात्
इध्मार्द्धप्रमाणं प्रादेशमात्रम् । प्रादेशद्वयमिध्म[illegible]
प्रमाणं परिकीर्त्तितम् । इति छन्दोगप[illegible]
शिष्टोक्ते: । अथेत्यनेन स्वगृह्योक्तशेषकर्म्म[illegible]
पनानन्तरं प्रकृतहोम: । अत्र बहुदेवत[illegible]
चरुहोमादुपघातहोम: ।
"चरौ तु बहुदैवत्ये होम: स्यादुपघातवत् ।"
इति छन्दोगपरिशिष्टधृतवचनात्
उपघातलक्षणमाह गृह्यासंग्रह: ।
"पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धवि: ।
हूयते चानुपस्तीर्य्य उपघात: स उच्यते ।
यद्युपघातं जुहुयाच्चरावाज्यं समापयेत् ।
मेक्षणेन तु होतव्यं नाज्यभागो न स्विष्टकृत्
अनुपस्तीर्य्य इत्यनेन स्रुचि यच्चतुरावत्तं प[illegible]
वत्तं वा घृतोपस्तरणादिकं तदत्र नास्ति[illegible]
मेक्षणादिना सकृत् गृहीत्वा होतव्यम् । [illegible]
प्रकृतहोमात् प्राक् वह्निपूजनमाह मार्क[illegible]
पुराणम् ।
"पूजयेच्च ततो वह्निं दद्याच्चाप्याहुती: क्रमात्
तत इति वह्नेर्नामकरणाद्यावत्कार[illegible]
होमाद्युत्थाने स्मृति: ।
"मन्त्रेणोङ्कारपूर्व्वेण स्वाहान्तेन विचक्षण: ।
स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम्
ततस्तद्विष्णोरितिमन्त्रेण चरुणा होमयेत् । [illegible]
व्याहृत्या प्रत्येकं भूरित्यादिना । [illegible]
सावित्र्या । तद्विप्रासेति तद्विप्रासो [illegible]
व्याख्याय इत्यादिना । [illegible]

बृहत विश्वतोमुखं इत्यादिना। शैवाद्येः ग्निरीडे इत्यादिना। इषेत्वोर्ज्जेत्वा इत्यादिना। अग्न आयाहि इत्यादिना। शन्नो देवीरित्यादिना चतुर्भिः। भूरग्नये इत्यादिभिः। ततः होमं ग्नानमित्यादिना। ततो लोकपालेभ्य इत्यादिना स्वस्वमन्त्रैस्तत्तद्वेदोक्तदशदिक्पालमन्त्रैः। तत्र सामगानां इन्द्रस्य त्रातारमित्यादिना। अग्नेर्यमिं दूतं वृणीमहे इत्यादिना। यमस्य नाके सुपर्णमित्यादिना। निर्ऋतेर्वैत्यादि निर्ऋतीनां इत्यादिना। वरुणस्य इतवती भुवनानामित्यादिना। वायोः वात आवातु भेषजं इत्यादिना। सोमस्य सोमं राजानमित्यादिना। ईशानस्य अभित्वा शूरनो नुम इत्यादिना। ब्रह्मणो ब्रह्मयज्ञानां प्रथममित्यादिना। अनन्तस्य नर्व्वेष्वीदुतमित्यादिना। तथा च गोभिलीयकर्म्मप्रदीपे।

"त्रातारमिन्द्रमवितारमिन्द्रस्य परिकीर्त्तितः।
अग्निं दूतं वृणीमहे वह्नेर्मन्त्रो यमस्य वै॥
नाके सुपर्णमुपयत् वेत्यादिर्निर्ऋतेस्तथा।
इतवतीति वरुणस्य वात आवातु भेषजम्॥
वायोर्मन्त्रः समुद्दिष्टः सोमं राजानमित्यृचा।
सोमस्य मन्त्रः कथितस्त्वभित्वेऽतोऽत्र उच्यते॥"

ईशे ईशानस्य।

"ब्रह्मयज्ञानां प्रथमं ब्रह्मणः परिकीर्त्तितः।
नर्व्वेष्वीदुतमिति च सर्पस्य समुदाहृतः॥"

नवग्रहेभ्यः नवग्रहेभ्यः स्वस्वमन्त्रैः सर्व्ववेदसाधारणैः। सूर्य्यस्याकृष्णेनेत्यादिना। सोमस्याप्यायेत्यादिना। मङ्गलस्याग्निर्मूर्द्धा इत्यादिना। बुधस्याये विवस्वदित्यादिना। बृहस्पतेर्बृहस्पते परिदीयेत्यादिना। शुक्रस्य शुक्रन्तेऽन्यद्यजतन्त इत्यादिना। शनैश्चरस्य शन्नो देवीरित्यादिना। राहोः कयानश्चित्र इत्यादिना। केतोः केतुं कृण्वन्नित्यादिना। तथा च मत्स्यपुराणम्।

"आकृष्णेनेति सूर्य्याय होमः कार्य्यो विजानता।
आप्यायस्वेति सोमाय मन्त्रेण जुहुयात् पुनः॥
अग्निर्मूर्द्धा दिवो मन्त्रमिति भौमाय कीर्त्तयेत्।
अग्ने विवस्वदुषस इति सोमसुताय च।
बृहस्पते परिदीया रथेनेति गुरोर्मतः।
शुक्रन्तेऽन्यदिति च शुक्रस्यापि निगद्यते॥
शनैश्चरायेति पुनः शन्नो देवीति होमयेत्।
कयानश्चित्र आभुव दूती राहोरुदाहृतः।
केतुं कृण्वन्निति कुर्य्यात् केतूनामुपशान्तये॥"

इत्थं ग्रहहोमं समाप्य ग्रहपीठेव प्राच्यादिदिग्भ्यः भावबलिं दद्यात्। तद्यथा। एव सामगानां: ॐ प्राच्यै दिशे नमः इत्यादिना। प्राच्यै दिशे स्वाहा इति श्रुतिदर्शनात्। चरिस्तरलेतिकृत्यप्रदीपाभ्यां स्वाहान्तेन बलिदानमिति। वस्तुतस्तु बलिप्रकरण एव प्राच्यादौनामोरुद्रपत्नीन् प्रयोग इति गोभिलसूत्रे जीविनिर्देशात् दिशां देवतानां बलौ प्रतीते। अत एवाचौतिवाक्यात् श्रुवहोमीये इत्यादौ ॐ प्राच्यै दिशे नम इति पत्नी प्रयुज्यते। इभिमंमेकत्विवोः परमं मेई इत्यादिवाक्यम्:। आज्यमित्ति तुग्नुव्येन ग्रहिहोमे तेषां चावर्त्तनात् मन्त्राकाङ्क्षायां प्रायश्चित्तत्वेन तद्विष्णोरित्यस्य परिग्रहः। ततस्तद्विष्णोरिति मन्त्रेण स्वाहान्तेन घृताक्तपलाशसमिद्भिरष्टोत्तरशतं जुहुयात्। पूर्व्वोक्तमन्त्रैः पूर्व्वोक्तदेवताभ्यः स्रुवेनाज्याहुतीर्जुहुयात्। पुरुषसूक्तस्त्तदेवता:। तत्र सामगानाम्। ॐ इदं विष्णुरिति। प्रेचकस्य विष्णोरिति। प्राकाशसुपर्णेव ब्रुवाब इति। सहस्रशीर्षेति। त्रिपादूर्द्ध इति। पुरुष एवेदमिति। एतावानस्य इति। ततो विराडिति। कयान इत्यादि पुरुषसूक्तम्। तथा च सामिधेनी श्रुतिः। इदं विष्णुः प्रेचकस्य विष्णोः प्राकाशसुपर्णेव ब्रुवाय: इति पारायमन्त्रं पुरुषव्रते चैवा वैष्णवीनामसहितेनां प्रयुञ्जन् विष्णुः प्रीयाति इति प्राकाशसुपर्णेव ब्रुवाय इति पारायमन्त्रमित्यनेन एको मन्त्रः प्रकाशितः। पुरुष इत्यनेन पुरुषपदयुक्तपञ्चमन्त्राः। व्रते इत्यनेन कयानश्चित्र इत्येको मन्त्रः। सामगो जुहुयात्। यजुर्व्वेदी तु तत्र षोडशभिः सहस्रशीर्षेत्यादि ऋग्भिः षोडशाहुतीर्जुहुयात्। इरावतीति तिलान् घृताक्तान् सकृज्जुहुयात्। एवं ब्रह्मानुयायिभ्यः स्वाहा विष्णुनुयायिभ्यः स्वाहा ईशानानुयायिभ्यः स्वाहा। एवं पूर्व्वोक्तनवग्रहमन्त्रैः पूर्व्वोक्तदिक्पालमन्त्रैश्च जुहुयात्। एवं पर्व्वतेभ्यः स्वाहा नदीभ्यः स्वाहा नदेभ्यः स्वाहा समुद्रेभ्यः स्वाहा भूः स्वाहा भुवः स्वाहा इति जुहुयात्। ततः परिभाषासिद्धं स्वष्टकृद्धोममहाव्याहृतिहोमं प्रायश्चित्तहोमञ्च कृत्वा स्रुचा तद्विष्णोरिति मन्त्रेण वौषडन्तेन पूर्णाहुतित्रयमुत्थाय जुहुयादिति विशेषोपादानात् नात्र स्वष्टकृत्पूर्व्वहोमः। ततः पञ्चगव्यं चरुशेषं प्राश्य स्नात्वा वा हेमयुक्तां सवत्सां तिलपात्रं अलङ्कृतां गाञ्च दक्षिणामाचार्य्याय दद्यात्। आचार्य्यपरञ्च।

"उदाहरन्ति वेदार्थान् यज्ञविद्याः स्मृतीरपि।
श्रुतिस्मृतिसमापन्नमाचार्य्यं तं विदुर्बुधाः॥"

इति छन्दोगपरिशिष्टात्॥

कर्म्मोपदेष्टुराचार्य्यत्वेन आचार्य्यपदं स्वयं होतृपक्षे ब्रह्मपरं अन्यहोतृपक्षे ब्रह्महोतृद्वयपरम्। स्वयं ब्रह्महोतृकर्म्मकरणपक्षे पुस्तकधारकपरम्।

"ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता।
कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्॥
विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत्।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्॥"

इति छन्दोगपरिशिष्टैकवाक्यत्वात्।

एवं व्रतविधिना अभिव्याप्य आदि प्रीयतां भगवान् विष्णुरित्यनेन कर्म्मसंस्कृतगोपथादिदाननिवहव्रतसङ्कल्पादिकरणाभ्यन्तरकृता वस्तुपावप्रतिष्ठा कर्त्तव्या। वस्तुदानस्य प्रकृतमीषचारिः प्रतिष्ठा वस्तुदानप्रतिष्ठा। तथा च कपिलपञ्चरात्रम्।

"प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्व्वाच्च तिष्ठतेः।
वक्ष्यत्वान्निपातानां संस्कारादौ प्रतेः स्थितिः॥"

तथा च गोपथादेरुक्तकर्म्मसंस्कृतस्य फलजनकत्वम्। अप्रतिष्ठन्तु निष्फलमित्युक्तेः। एतद्व्रतकर्म्मणा प्रीयतां भगवान् विष्णुरिति समापयेत्॥ *॥ अथ व्रतप्रतिष्ठाप्रयोगः। तत्र कृतनित्यक्रियः कथान्तं व्रतं समाप्य तत्तद्देवताप्रीतिकामो यथाशक्ति दानादि दद्यात्।

"व्रते देवस्य होत्सर्गे कूपादीनां प्रतिष्ठने।
दद्यात् षोडशदानानि विंशद्दानानि चैव वा॥"

इति दानसागरधृतवचनात्॥

ॐ तत् सवितुर्वाचं ॐ अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा तत्तद्व्रतफलप्राप्तिकामः कृतैतत् अमुकव्रतप्रतिष्ठामहं करिष्ये। को पैदृतकारिणो तदा अमुकगोत्रामुको देवीत्वावृत्ये इति सङ्कल्पं कुर्य्यात्। ततो घटं संस्थाप्य पञ्च देवान् संपूज्य गौर्य्यादिषोडशमातृकाः संपूज्याः। पुरुषश्चेत्तदा नान्दीमुखं कुर्य्यात्। तत उत्तराभिमुखं ब्राह्मणमुपवेश्य तत्समीपे आसनमानीय प्राङ्मुखो यजमानः ॐ साधु भवानास्तामिति कृताञ्जलिर्वदेत्। ॐ साध्वमासे इति प्रतिवचनम्। ॐ अर्च्चयिष्यामो भवन्तं इति पुनरुक्ते ॐ अर्च्चयेति प्रतिवचनम्। ततो वस्त्रालङ्कारगन्धपुष्पादिभिरभ्यर्च्य दक्षिणां जानु धृत्वा ॐ अद्येत्यादि अमुकगोत्रममुकदेवशर्म्माणमर्च्चितं कृतैतदमुकव्रतप्रतिष्ठाकर्म्मणि होमादिकर्म्मकरणाय भवन्तमहं वृणे। ॐ वृतोऽस्मीति प्रतिवचनम्। ॐ यथाविहितं व्रतकर्म्म कुरु। ॐ यथाज्ञानं करवाणि इति प्रतिवचनम्। ततो वेद्यां पञ्चगव्येनाभ्युक्ष्य पूर्व्वे पञ्च घटान् घटमेकं वा संस्थाप्य प्रथमलिखितक्रमेण भूतशुद्ध्यादिगणेशादिपूजां विधाय तत्तद्देवतां क्रमेण पूजयेत्। ततो होता स्वगृह्योक्तविधिनाग्निं संस्थाप्य ब्रह्मस्थापनानन्तरं चरुश्रपणं कुर्य्यात्। अन्यत् सर्व्वं प्रतिष्ठापद्धतौ ज्ञेयम्॥*॥ अथ व्रतप्रयोगः। स्वस्तिवाचनं कृत्वा सूर्य्यः सोम इति पठित्वा सङ्कल्पं कुर्य्यात्। अद्येत्यादि अमुककामोऽमुकव्रतमहं करिष्ये। व्रतादृतौ आदावित्थंखाहुलिखेत् अद्यारभ्येति च उदङ्मुखो भूत्वा एतत् कुर्य्यात्। ॐ स्वः स्विस्ति नम इति स्वस्तिकं मार्ज्जयेत्। ॐ स इत्यभ्युक्षयेत्। वामहस्तेन स्वस्तिकं गृहीत्वा कुशेन प्रणवपूर्व्वकं चतुर्थ्यन्तव्रतदेवतानाम लिखेत्। हस्तप्रमाणं स्वस्तिकं चतुरस्रं सिततण्डुलेनापूर्य मध्ये सितस्थूलकर्णिकं हरिद्राचूर्णेन तद्बहिर्वितस्तिप्रमाणान्योन्यसक्तानि अष्टदलानि सिततण्डुलचूर्णेन पञ्चरङ्गैः केशराणि कुसुम्भचूर्णेन पञ्चवर्णैर्विलेपनादिपञ्चचूर्णेन पीठमालादि रचयित्वा कृत्वा घटं संस्थाप्य कामार्थाच्चं कृत्वा तदुक्तनामानं पूजाप्रकरण-

शीर्षाशूयमानैर्भावाजां [illegible]यस्तथा ।
मानसीऽपि विजयेत् तथा भवति भैरवा ।
[illegible]मादिभिर्ब्बहुतापी भाव्याभिव: कृत: ॥
दु:खं सर्व्वतो भेदैर्भिद्यते मुनिसत्तम ।
[illegible]मास्तनुर्गर्भे जन्तुर्बहुमलाहते ॥
[illegible]पृष्ठी भुग्नपृष्ठग्रीवास्थिसंहति: ।
[illegible]तीक्ष्णोष्णलवणैर्मातृभोजनै: ॥
[illegible]तापिभिरत्यर्थं वर्धमानातिवेदन: ।
[illegible]रणाकुञ्चनादौ नाङ्गानां प्रभुरात्मन: ॥
[illegible]मूत्रमहापङ्कशायी सर्वत्र पीड़ित: ।
निरुच्छ्वास: सचैतन्य: स्मरन् जन्मशतान्यथ ॥
[illegible] गर्भेऽतिदु:खेन निजकर्म्मनिबन्धन: ।
जायमान: पुरीषासृङ्मूत्रशुक्राविलानन: ॥
[illegible]पत्येन वातेन पीड्यमानास्थिबन्धन: ।
[illegible]सुखो वै क्रियते प्रबलै: सूतिमारुतै: ॥
[illegible]र्निष्क्रान्तिमाप्नोति जठरान्मातुरातुर: ।
मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना ॥
विज्ञानं भ्रंशमाप्नोति जातश्च मुनिसत्तम ।
[illegible]रिव तुन्नाङ्ग: क्रकचैरिव दारित: ॥
पूतिव्रणान्निपतितो धरण्यां क्रमिको यथा ।
[illegible]यनेऽपि वाशक्त: परिवर्त्तेऽप्यनीश्वर: ॥
[illegible]पानादिकाहारमप्याप्नोति परेच्छया ।
[illegible]चि: स्रस्तरे सुप्त: कीटदंशादिभिस्तथा ॥
[illegible]माणोऽपि नैवेषां समर्थो विनिवारणे ।
[illegible]दु:खान्यनेकानि जन्मनोऽनन्तराणि च ॥
[illegible]भावे यदाप्नोति आधिभौतादिकानि च ।
[illegible]नतमसाच्छन्नो मूढान्त:करणो नर: ॥
न जानाति कुत: कोऽहं क्व वा गन्ता किमा-
त्मक: ॥"

इति विष्णुपुराणे ६ अंशे ५ अध्याय: ॥*॥
[illegible] शरीरसंख्याव्याकरणं शारीरं व्याख्या-
स्याम: । शुक्रशोणितं गर्भाशयस्थमात्मप्रकृति-
विकारसंमूर्च्छितं गर्भ इत्युच्यते । तञ्च चेतना-
[illegible] वायुर्विभजति । तेज एनं पचति ।
आप: क्लेदयन्ति । पृथिवी संहन्ति । आकाशं
विवर्द्धयति । एवं विवर्द्धित: स यदा हस्तपाद-
जिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा श-
रीरमिति संज्ञां लभते । तच्च षड़ङ्गं शाखा-
[illegible] मध्यं पञ्चमं षष्ठं शिर इति ॥*॥ अत:
[illegible] प्रत्यङ्गानि कथ्यन्ते । मस्तकोदरपृष्ठनाभि-
[illegible]नासाचिबुकवस्तिग्रीवा इत्येता एकैका: ।
[illegible]नासाभ्रूशङ्खांसगण्डकक्षस्तनवृषणपार्श्व-
[illegible]जानुबाहूरुप्रभृतयो द्वे द्वे । विंशतिरङ्गु-
[illegible] स्रोतांसि च वक्ष्यमाणानि । एष प्रत्यङ्ग-
[illegible] ॥*॥ तस्य पुन: संख्यानम् । त्वच:
[illegible] मला दोषा यकृत्प्लीहानौ फुप्-
फुस[illegible] हृदयमाशया अन्त्राणि वृक्कौ
स्रोतांसि [illegible] आशयानि मूर्द्धा रक्तम: शिरश्च:
[illegible] सन्धय: [illegible]
पेश्य: [illegible] शिरा: धमन्यो योगवहानि
[illegible]
[illegible]



[illegible]
[illegible] द्वे ह्रदौ [illegible]
त्तरं मर्म्मशतम् । चतुर्विंशतिर्धमन्य: । त्रयो
दोषास्त्रयो मला: । नव स्रोतांसि इति
समास: ॥*॥ विस्तारोऽत ऊर्द्धम् । त्वचोऽभि-
हिता: कला धातवो मला दोषो यकृत्प्लीहानौ
फुप्फुस उण्डुको हृदयं वृक्कौ च ॥*॥ आश-
यास्तु वाताशय: पित्ताशय: श्लेष्माशयो रक्ता-
शय आमाशय: पक्वाशयो मूत्राशय: स्त्रीणां
गर्भाशयोऽष्टम इति ॥*॥ सार्द्धत्रिव्यामान्यन्त्राणि
पुंसां स्त्रीणामर्द्धव्यामहीनानि । श्रवणनयन-
वदनघ्राणगुदमेढ़्राणि नव स्रोतांसि नराणां
बहिर्मुखान्येतान्येव स्त्रीणामपराणि च त्रीणि:
द्वे स्तनयोरधस्ताद्रक्तवहञ्च ॥*॥ षोड़श कण्डरा
तासाञ्चतस्र: पादयोस्तावत्यो हस्तग्रीवापृष्ठेषु ।
तत्र हस्तपादगतानां कण्डराणां नखा: प्ररोहा:
ग्रीवाहृदयनिबन्धिनीनां अधोभागगतानां मेढ़्रं
श्रोणिपृष्ठनिबन्धिनीनां अधोभागगतानां बिम्ब:
मूर्द्धोरुवक्षोऽक्षपिण्डादीनाञ्च मांससिरास्नायु-
स्थिजालानि प्रत्येकं चत्वारि चत्वारि । तानि
मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि
परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति ।
यैर्गवाक्षितमिदं शरीरम् ॥*॥ षट् कूर्च्चास्ते
हस्तपादग्रीवामेढ़्रेषु । हस्तयोर्द्वौ पादयोर्द्वौ
ग्रीवामेढ़्रयोरेकैक: । महत्यो मांसरज्जवश्चतस्र:
पृष्ठवंशमुभयत: पेशीनिबन्धनार्थं द्वे बाह्ये
आभ्यन्तरे च द्वे ॥*॥ सप्त सेवन्य: । शिरसि
विभक्ता: पञ्च जिह्वाशेफसोरेकैका ता: परि-
हर्त्तव्या: शस्त्रेण ॥*॥ चतुर्द्दशास्थ्नां संघाता: ।
तेषां त्रयो गुल्फजानुवङ्क्षणेषु । एतेनेतरसक्थि-
बाहू च व्याख्यातौ । त्रिकशिरसोरेकैक: ॥*॥
चतुर्द्दशैव सीमन्ता: । ते चास्थिसंघातवद्गण-
नीया यतस्तैर्युक्ता अस्थिसंघाता: । ये युक्ता:
संघातास्तु खल्वष्टादशैकेषाम् ॥*॥ त्रीणि स
षष्ठान्यस्थिशतानि वेदवादिनो भाषन्ते । शल्य-
तन्त्रे तु त्रीण्येव शतानि । तेषां सविंशमस्थि-
शतं शाखासु । सप्तदशोत्तरं शतं श्रोणिपार्श्व-
पृष्ठोदरउर:सु । ग्रीवां प्रत्यूर्द्धं त्रिषष्टि: । एव-
मस्थ्नां त्रीणि शतानि पूर्य्यन्ते । एकैकस्यान्तु
पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश । तल
कूर्चगुल्फसंश्रितानि दश । पार्ष्ण्यामेकम् ।
जङ्घायां द्वे । जानुन्येकम् । एकमूराविति ।
त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतर-
सक्थिबाहू च व्याख्यातौ । श्रोण्यां पञ्च तेषां
गुदभगनितम्बेषु चत्वारि । त्रिकसंश्रितमेकम् ।
पार्श्वे षट्त्रिंशदेवमेकस्मिन् द्वितीयेऽप्येवम् ।
पृष्ठे त्रिंशत् । अष्टावुरसि । द्वे अक्षकसंज्ञे ।
ग्रीवायां नवकम् । कण्ठनाड्यां चत्वारि । द्वे
हन्वो: । दन्ता द्वात्रिंशत् । नासायां त्रीणि ।
एकं तालुनि । गण्डकर्णशङ्खेष्वेकैकम् । षट्-
शिरसि । [illegible]
[illegible]

[illegible]
[illegible]
[illegible]
पृष्ठोदरोर:सु [illegible]
संख्यानि ॥*॥ भवन्ति चात्र । [illegible]
"अभ्यन्तरगतै: सारैर्यथा तिष्ठन्ति [illegible]
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां [illegible]
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् [illegible]
अस्थीनि न विनश्यन्ति साराण्येतानि [illegible]
[illegible]
मांसान्यत्र निबद्धानि सिराभि: स्नायुभि[illegible]
अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति [illegible]
सन्धयस्तु द्विविधाश्चेष्टावन्त: स्थिराश्च ।
"शाखासु हन्वो: कट्याञ्च चेष्टावन्तस्तु [illegible]
शेषास्तु सन्धय: सर्वे विज्ञेया हि स्थिरा बुधै: ।
संख्यातस्तु दशोत्तरे द्वे शते । तेषां शाखा-
स्वष्टषष्टिरेकोनषष्टि: । कोष्ठे । ग्रीवां प्रत्यूर्द्ध-
त्र्यशीति: । एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयो
द्वावङ्गुष्ठे ते चतुर्द्दश । जानुगुल्फवङ्क्षणेष्वेकैक:
एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति । एते-
नेतरसक्थिबाहू च व्याख्यातौ । त्रय: कटी-
कपालेषु । चतुर्विंशति: पृष्ठवंशे । तावन्त एव
पार्श्वयो: । उरस्यष्टौ । तावन्त एव ग्रीवायां
त्रय: कण्ठे । नाड़ीषु हृदयक्लोमनिबद्धास्त्वष्टा-
दश । दन्तपरिमाणादन्तमूलेषु । एक: का[illegible]
लके नासायाञ्च । द्वौ वर्त्म मण्डलजौ नेत्राश्रयौ
गण्डकर्णशङ्खेष्वेकैक: । द्वौ हनुसन्धी । द्वा-
वुपरिष्टाद्भ्रुवो: शङ्खयोश्च । पञ्च शिर:कपा-
लेषु । एको मूर्द्ध्नि ॥*॥ त एते सन्धयो-
ऽष्टविधा: । कोरोदूखलसामुद्गप्रतरतुन्नसेवनी-
वायसतुण्डमण्डलशङ्खावर्त्ता: । तेषामङ्गुलिम[illegible]
बन्धगुल्फजानुकूर्परेषु कोरा: सन्धय: । कक्षा-
वङ्क्षणदशनेषूदूखला: । अंसपीठगुदभगनितम्बे-
षु सामुद्गा: । ग्रीवापृष्ठवंशयो: प्रतरा: । शिर:-
कटीकपालेषु तुन्नसेवनी । हन्वोरुभयत-
स्तु वायसतुण्डा: । कण्ठहृदयनेत्रक्लोमनाडी[illegible]
मण्डला: । श्रोत्रशृङ्गाटकेषु शङ्खावर्त्ता: । [illegible]
तेषां नामभिरेवाकृतय: प्रायेण व्याख्याता: ।
"अस्थ्नान्तु सन्धयो ह्येते केवला: परिकीर्त्ति[illegible]
पेशीस्नायुशिराणान्तु सन्धिसंख्या न विद्यते ।"
नवस्नायुशतानि । तासां शाखासु षट्[illegible]
द्वे शते त्रिंशच्च कोष्ठे । ग्रीवां प्रत्यूर्द्धं [illegible]
एकैकस्यान्तु पादाङ्गुल्यां षट् [illegible]
त्रिंशत् । तावत्य एव तलकूर्च्च[illegible]
एव जंघायाम् । दश जानुनि । [illegible]
ऊरौ । दश वङ्क्षणे । [illegible]
सक्थ्नि भवन्ति । एतेनेतर[illegible]
व्याख्यातो । कटि[illegible]
पार्श्वयो: [illegible] । [illegible] त्रिंशत् । [illegible]
ग्रीवायाम् । [illegible]
[illegible]

[illegible]
[illegible]
[illegible] सर्व्वे [illegible] ॥
[illegible] पक्वाशयास्तु वर्त्ती च [illegible] ।
[illegible] तथा पृष्ठे पृथुलाश्च शिरस्तु च ॥
[illegible] बद्धनैकैर्मिथुनैर्युता ।
[illegible] भवेदेषु सूक्ष्मा सुसमाहिता ॥
[illegible] शरीरेऽस्मिन् यावन्त: सन्धय: स्मृता: ।
[illegible] भास्वता नरा: ॥
[illegible] न वा पेश्यो न शिरा न च सन्धय: ।
[illegible] स्तथा स्नायवो यथा स्नायु: शरीरिणम् ॥
[illegible] स्नायू: प्रविजानाति बाह्याश्चाभ्यन्तरा-
स्तथा ।
[illegible] गूढं शल्यमाहर्त्तुं देहाच्छक्नोति देहि-
नाम् ॥" * ॥

[illegible] पेशीशतानि भवन्ति । तासां चत्वारि शतानि शाखासु । कोष्ठे षट्षष्टि: । ग्रीवां प्रत्यूर्द्ध्वं चतुस्त्रिंशत् एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ता: पञ्चदश । दश प्रपदे । पादोपरि कूर्च्चसन्निविष्टास्तावत्य एव । दश गुल्फतलयो: । गुल्फजान्वन्तरे विंशति: । पञ्च जानुनि । विंशतिरूरौ । दश वङ्क्षणे । शतमेवमेकस्मिन् सक्थ्नि भवन्ति । एते नेतरसक्थि बाहू च व्याख्यातौ । तिस्र: पायौ । एका मेढ्रे । सेवन्यां चापरा । द्वे वृषणयो: । स्फिचो: पञ्च पञ्च । द्वे वस्तिशिरसि । पञ्चोदरे । नाभ्यामेका । पृष्ठोर्द्ध्वसंनिविष्टा: पञ्च पञ्च दीर्घा: । षट् पार्श्वयो: । दश वक्षसि । अक्षकांसौ प्रति समन्तात् सप्त । द्वे हृदयामाशययो: । षट् यकृत्प्लीहोण्डुकेषु । ग्रीवायां चतस्र: । अष्टौ हन्वो: । एकैका काकलकगलयो: । द्वे तालुनि । एका जिह्वायाम् । ओष्ठयोर्द्वे । घोणायां द्वे । द्वे नेत्रयो: । गण्डयोश्चतस्र: । कर्णयोर्द्वे । चतस्रो ललाटे । एका शिरसीत्येवमेतानि पञ्च पेशीशतानि ॥ * ॥
"शिरास्नायुस्थिपर्व्वाणि सन्धयश्च शरीरिणाम् ।
पेशीभि: संवृतान्यत्र बलवन्ति भवन्त्यत: ॥"
स्त्रीणान्तु विंशतिरधिका । दश तासां स्तनयोरेकैकस्मिन् । पञ्च पञ्च यौवने तासां परिवृद्धि: । अपत्यपथे चतस्रस्तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते बाह्ये च प्रवृत्ते द्वे । गर्भच्छिद्रसंश्रितास्तिस्र: । शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव । पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति । [illegible] पेशीनां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिर-मृदुश्लक्ष्णकर्कशभावा: सन्ध्यस्थिशिरास्नायु-प्रच्छादका यथाप्रदेशं स्वभावत एव भवन्ति ॥*
[illegible] चात्र ।
"पुंसां पेश्य: पुरस्ताद्या: प्रोक्ता लक्षण-
[illegible] मुष्कजा: ।
[illegible] स्त्रीणां [illegible] ॥"
[illegible]
[illegible]

[illegible]
[illegible] सुख भवति [illegible]
तत्संस्थाना तदाकारा मर्म्मशय्या विदुर्बुधा: ॥
प्राङ्मुखोऽभिमुख: शेते गर्भो गर्भाशये स्त्रिया: ।
स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥
त्वक्पर्य्यन्तस्य देहस्य योऽयमङ्गविनिश्चय: ।
शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् ॥
तस्मान्नि:संशयं ज्ञानं हर्त्ता शल्यस्य वाञ्छता ।
शोधयित्वा मृतं सम्यक् द्रष्टव्योऽङ्गविनिश्चय: ॥
प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टञ्च यद्भवेत् ।
समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम् ॥"
तस्मात् समस्तगात्रमविषोपहतं अदीर्घव्याधिपीडितमवर्षशतिकं नि:सृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशे देशे कोथयेत् । सम्यक्प्रकुथितञ्चोद्धृत्य ततो देहं सप्तरात्रादुशीरवालवेणुवल्कलकूर्च्चानामन्यतमेन शनै: शनैरवघर्षयंस्त्वगादीन् सर्व्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा । श्लोकौ चात्र भवत: ।
"न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभु: ।
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥
शरीरे चैव शास्त्रे च दृष्टार्थ: स्याद्विशारद: ।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रिया: ॥"

षष्ठोऽध्याय: ।

अथात: प्रत्येकमर्म्मनिर्देशं शारीरं व्याख्यास्याम: । सप्तोत्तरं मर्म्मशतम् । तानि मर्म्माणि पञ्चात्मकानि । तद्यथा । मांसमर्म्माणि सिरामर्म्माणि स्नायुमर्म्माणि । अस्थिमर्म्माणि । सन्धिमर्म्माणि चेति । न खलु मांससिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति यस्मान्नोपलभ्यन्ते । तत्रैकादश मांसमर्म्माणि । एकचत्वारिंशत् शिरामर्म्माणि । सप्तविंशति: स्नायुमर्म्माणि । अष्टावस्थिमर्म्माणि । विंशति: सन्धिमर्म्माणि । तदेतत् सप्तोत्तरं मर्म्मशतम् ॥*॥ तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ । उदरोरसोर्द्वादश । चतुर्द्दश पृष्ठे । ग्रीवां प्रत्यूर्द्ध्वं सप्तत्रिंशत् । तत्र सक्थिमर्म्माणि क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोगुल्फेन्द्रवस्तिजान्वाण्यूर्व्वीलोहिताक्षाणि विटपञ्चेति । एतेनेतरसक्थि व्याख्यातम् ॥*॥ उदरोरसोस्तु । गुदवस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापाव्यपस्तम्भौ चेति । पृष्ठमर्म्माणि तु कटीकतरुणकुकुन्दरनितम्बपार्श्वसन्धिवृहत्यंसफलकान्यंसौ चेति । बाहुमर्म्माणि तु क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोमणिबन्धेन्द्रवस्तिकूर्प्पराण्युर्व्वीलोहिताक्षाणि कक्षधरञ्चेति । एतेनेतरो बाहुर्व्याख्यात: । जत्रूर्द्ध्वं मर्म्माणि चतस्रो धमन्योऽष्टौ मातृका: । द्वे कृकाटिके । द्वे विधुरे । द्वौ फणौ । द्वावपाङ्गौ । [illegible]
[illegible]

[illegible]
[illegible] स्तनरोहितानि मांसमर्म्माणि । नीलधमनीमातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिवृहतीलोहिताक्षोर्व्व्य: शिरामर्म्माणि । आणिविटपकक्षधरकूर्च्चकूर्च्चशिरोवस्तिक्षिप्रांसविधुरोत्क्षेपा: स्नायुमर्म्माणि । कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्म्माणि । जानुकूर्प्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त्तकृकाटिकाश्चेति सन्धिमर्म्माणि । तान्येतानि पञ्चविकल्पानि मर्म्माणि भवन्ति । तद्यथा । सद्य:प्राणहराणि । कालान्तरप्राणहराणि । विशल्यघ्नानि । वैकल्यकराणि । रुजाकराणीति । तत्र सद्य:प्राणहराण्येकोनविंशति: । कालान्तरप्राणहराणि त्रयस्त्रिंशत् । त्रीणि विशल्यघ्नानि । चतुश्चत्वारिंशद्वैकल्यकराणि । अष्टौ रुजाकराणीति ॥ * ॥ भवन्ति चात्र ।
"शृङ्गाटकान्यधिपति: शङ्खौ कण्ठशिरोगुदम् ।
हृदयं वस्तिनाभी च घ्नन्ति सद्योहतानि तु ॥
वक्षोमर्म्माणि सीमन्ततलक्षिप्रेन्द्रवस्तय: ।
कटीकतरुणे सन्धी पार्श्वजौ बृहती च या ॥
नितम्बाविति चैतानि कालान्तरहराणि तु ।
उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्द्दिशेत् ॥
लोहिताक्षाणि जानूर्व्वी कूर्च्चा विटपकूर्प्परा: ।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥
अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा ।
वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्च्चशिरांसि च ।
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान् ।
क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥"
मर्म्माणि नाम मांसशिरास्नाय्वस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति तस्मान्मर्म्मस्वभिहतास्तांस्तान् भावानापद्यन्ते । तत्र सद्य:प्राणहराण्याग्नेयानि अग्निगुणेष्वाशु क्षीणेषु क्षपयन्ति । कालान्तरप्राणहराणि सौम्याग्नेयानि अग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति । विशल्यघ्नानि प्राणहराणि वायव्यानि शल्यमुखनिरुद्धो यावद्वायुस्तिष्ठति तावज्जीवत्युद्धृतमात्रे तु शल्ये मर्म्मस्थानाश्रितो वायुर्निष्क्रामति तस्मात् सशल्यो जीवत्युद्धृतशल्यो म्रियते । वैकल्यकराणि सौम्यानि सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति । रुजाकराण्यग्निवायुगुणभूयिष्ठानि विशेषतश्च तौ रुजाकरौ । पाञ्चभौतिकीञ्च रुजामाहुरेके । केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां विद्धत्वात् सद्य:प्राणहराणि । एकहीनानामल्पानां वा कालान्तरप्राणहराणि । द्विहीनानां विशल्यप्राणहराणि । त्रिहीनानां वैकल्यकराणि । एकस्मिन्नेव रुजाकराणीति । यतश्चैवमतोऽस्थिमर्म्मस्वभिहतेषु शोणित[illegible] भवति ॥*॥

"चतुर्विधा यास्तु सिराः शरीरे
प्रायेण ता मर्म्मसु सन्निविष्टाः ।
स्नाय्वस्थिमांसानि तथैव सन्धीन्
सन्तर्प्य देहं प्रतिपालयन्ति ॥
ततः क्षते मर्म्मणि ताः प्रवृद्धः
समन्ततो वायुरभिस्तृणोति ।
विवर्द्धमानस्तु स मातरिश्वा
रुजः सुतीव्राः प्रतनोति काये ॥
रुजाभिभूतन्तु ततः शरीरं
प्रलीयते नश्यति चास्य संज्ञा ।
अतो हि शल्यं विनिहन्तुमिच्छन्
मर्म्माणि यत्नेन परीक्ष्य कर्षेत् ॥"

एतेन शेषं व्याख्यातम् । तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति । कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति । विशल्यप्राणहरमन्ते विद्धं कालान्तरेण क्लेशयति रुजाञ्च करोति । रुजाकरमतीव्रवेदनं भवति । तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्मारयन्ति । कालान्तरप्राणहराणि पक्षान्मासाद्वा । तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति । विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति ॥ * ॥ अत ऊर्द्ध्वं प्रत्येकशो मर्म्मस्थानान्यनुव्याख्यास्यामः । तत्र पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म्म तत्र विद्धस्याक्षेपकेण मरणम् । मध्यमाङ्गुलीमनुपूर्व्वेण मध्ये पादतलस्य तलहृदयं नाम तत्रापि रुजाभिर्मरणम् । क्षिप्रस्योपरिष्टादुभयतः कूर्च्चो नाम तत्र पादस्य भ्रमणवेपने भवतः । गुल्फसन्धेरध उभयतः कूर्च्चशिरो नाम तत्र रुजाशोफौ । पादजङ्घयोः सन्धाने गुल्फो नाम तत्र रुजस्तब्धपादता खञ्जता वा । पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम तत्र शोणितक्षये मरणम् । जङ्घोर्व्वोः सन्धाने जानु नाम तत्र खञ्जता जानुन ऊर्द्ध्वमुभयतस्त्र्यङ्गुलमाणिर्नाम तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च । ऊरुमध्ये ऊर्व्वी नाम तत्र शोणितक्षयात् सक्थिशोषः । ऊर्व्व्या ऊर्द्ध्वमधोवङ्क्षणसन्धेरूरुमूले लोहिताक्षं नाम तत्र लोहितक्षयेण पक्षाघातः । वङ्क्षणवृषणयोरन्तरे विटपं नाम तत्र षाण्ड्यमल्पशुक्रता वा भवति । एवमेतान्येकादशैकसक्थिमर्म्माणि व्याख्यातानि । एतेनेतरसक्थिबाहू च व्याख्यातौ । विशेषतस्तु यानि सक्थ्नि गुल्फजानुविटपानि तानि बाहौ मणिबन्धकूर्परकक्षधराणि । यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं वक्षःकक्षयोर्मध्ये कक्षधरं तस्मिंश्च विद्धे त एवोपद्रवाः । विशेषतस्तु मणिबन्धे कुण्ठता । कूर्पराख्ये कुणिः । कक्षधरे पक्षाघातः । एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्म्माणि व्याख्यातानि ॥ * ॥ अत ऊर्द्ध्वमुदरोरसोर्म्मर्म्माण्यनुव्याख्यास्यामः । तत्र वातवर्च्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म्म तत्र सद्योमरणम् । [illegible] अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो वस्तिर्नाम तत्रापि सद्योमरणमृतेऽश्मरीव्रणात् । तत्राप्युभयतो भिन्ने न जीवत्येकतो भिन्ने मूत्रस्रावी व्रणो भवति । स तु यत्नेनोपक्रान्तो रोहति । पक्वामाशययोर्मध्ये सिराप्रभवा नाभिर्नाम तत्रापि सद्य एव मरणम् । स्तनयोर्म्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं हृदयं नाम तत्र सद्य एव मरणम् । स्तनयोरधस्तात् द्व्यङ्गुलमुभयतः स्तनमूले नाम मर्म्मणी तत्र कफपूर्णकोष्ठतया कासश्वासाभ्यां म्रियते । स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्याञ्च म्रियते । अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम तत्र रक्तेन पूयभावं गतेन मरणम् । उभयोस्तत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम तत्र वातपूर्णकोष्ठतया कासश्वासाभ्याञ्च मरणम् । एवमेतान्युदरोरसोर्द्वादश मर्म्माणि व्याख्यातानि ॥ * ॥ अत ऊर्द्ध्वं पृष्ठमर्म्माण्यनुव्याख्यास्यामः । तत्र पृष्ठवंशमुभयतः प्रतिश्रोणिकाण्डमस्थिनी कटीकतरुणे नाम मर्म्मणी तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते । पार्श्वजघनबहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्म्मणी तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च । श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम तत्राधःकायशोषो दौर्ब्बल्याच्च मरणम् । अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्ध्वञ्च जघनात् पार्श्वसन्धी नाम तत्र लोहितपूर्णकोष्ठतया म्रियते । स्तनमूलादुभयतः पृष्ठवंशस्य बृहती नाम तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्म्रियते । पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम तत्र बाह्वोः स्वापः शोषो वा । बाहुमूर्द्ध्वग्रीवामध्येंऽसपीठस्कन्धनिबन्धनावंसौ नाम तत्र स्तब्धबाहुता । एवमेतानि चतुर्द्दश पृष्ठमर्म्माणि व्याख्यातानि ॥ * ॥ अत ऊर्द्ध्वं जत्रुगतानि व्याख्यास्यामः । तत्र कण्ठनाडीमुभयतश्चतस्रो धमन्यो द्वे नीले द्वे च मन्ये व्यत्यासेन तत्र मूकता स्वरवैकृतमरसग्राहिता च । ग्रीवायामुभयतश्चतस्रः सिरामातृकास्तत्र सद्योमरणम् । शिरोग्रीवयोः सन्धाने कृकाटिके नाम तत्र चलमूर्द्धता । कर्णपृष्ठतोऽधःसंश्रिते विधुरे नाम तत्र बाधिर्य्यम् । घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतः फणे नाम तत्र गन्धाज्ञानम् । भ्रूपुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ नाम तत्रान्ध्यं दृष्ट्युपघातो वा । भ्रुवोरुपरि निम्नयोरावर्त्तौ नाम तत्राप्यान्ध्यं दृष्ट्युपघातश्च । भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम तत्र सद्योमरणम् । शङ्खयोरुपरि केशान्त उत्क्षेपौ नाम तत्र सशल्यो जीवति पाकात् पतितशल्यो वा नोद्धृतशल्यः । भ्रुवोर्मध्ये स्थपनी नाम तत्रोत्क्षेपवत् । [illegible] विभक्ताः [illegible] नामैकैकं मरणम् । [illegible] सिराणां मध्ये सिरासन्निपाताः शृङ्गाटकानि तानि चत्वारि मर्म्माणि तत्रापि सद्योमरणम् । मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्त्तः अधिपतिस्तत्रापि सद्योमरणम् । एवमेतानि सप्तत्रिंशज्जत्रूर्द्ध्वं जत्रुगतानि मर्म्माणि व्याख्यातानि ॥ * ॥ भवन्ति चात्र ।

"ऊर्व्व्यः शिरांसि विटपे च सकक्षपार्श्वे
एकैकमङ्गुलमिता स्तनपूर्व्वमूलम् ।
विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं
त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥
हृद्वस्तिकूर्च्चगुदनाभि वदन्ति मूर्द्ध्नि
चत्वारि पञ्च च गले दश यानि च द्वे ।
तानि स्वपाणितलकुञ्चितसंमितानि
शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धम् ॥
एतत् प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः
शस्त्रेण कर्म्मकरणं परिहृत्य मर्म्म ।
पार्श्वाभिघातितमपीह निहन्ति मर्म्म
तस्माद्धि मर्म्मसदनं परिवर्ज्जनीयम् ॥
छिन्नेषु पाणिचरणेषु शिरा नराणां
सङ्कोचमीयुरसृगल्पमतो निरेति ।
प्राप्यामितव्यसनमुग्रमतो मनुष्याः
संछिन्नशाखतरुवन्निधनं न यान्ति ॥
क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं
गच्छत्यतीव पवनश्च रुजं करोति ।
एवं विनाशमुपयान्ति हि तत्र विद्धा
वृक्षा इवायुधविघातनिकृत्तमूलाः ॥
तस्मात्तयोरभिहतस्य तु पाणिपादं
छेत्तव्यमाशु मणिबन्धनगुल्फदेशे ।
मर्म्माणि शल्यविषयार्द्धमुदाहरन्ति
यस्माच्च मर्म्मसु हता न भवन्ति सद्यः ॥
जीवन्ति तत्र यदि वैद्यगुणेन केचित्
ते प्राप्नुवन्ति विकलत्वमसंशयं हि ।
सम्भिन्नजर्ज्जरितकोष्ठशिरःकपाला
जीवन्ति शस्त्रनिहतैश्च शरीरदेशैः ।
छिन्नैश्च सक्थिभुजपादकरैरशेषै-
र्येषां न मर्म्मपतिता विविधाः प्रहाराः ॥
सोममारुततेजांसि रजःसत्त्वतमांसि च ।
मर्म्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते ॥
मर्म्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः ।
इन्द्रियार्थेष्वसंप्राप्तिर्म्मनोबुद्धिविपर्य्ययः ॥
रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते ।
हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम् ॥
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति ।
हते वैकल्यजनने केवलं वैद्यनैपुणात् ॥
शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात् ।
विशल्यघ्नेषु विज्ञेयं पूर्व्वोक्तं यच्च कारणम् ॥
रुजाकराणि मर्म्माणि क्षतानि विविधा रुजः ।
कुर्व्वन्त्यन्ते च वैकल्यं [illegible]
[illegible]

शिखावला, स्त्री, (शिखा+वलच्। टाप्।) मयूरशिखा। इति राजनिर्घण्टः॥

शिखावान्, [त्] पुं, (शिखा विद्यतेऽस्य। शिखा+मतुप्। मस्य वः।) अग्निः। चित्रकवृक्षः। इत्यमरः॥ केतुग्रहः। इति शब्दरत्नावली॥ शिखायुक्ते, त्रि॥ (यथा, मनौ १।३८ श्लोके। "कैतवः शिखावन्ति ज्योतींषि॥" इति मेधातिथिकृतटीका॥)

शिखावृक्षः, पुं, (शिखाया वृक्ष इव।) दीपवृक्षः। इति शिखातरुशब्ददर्शनात्॥

शिखावृत्तिः, स्त्री, (शिखेव वृत्तिर्यस्याः।) कायिका वृद्धिः। प्रात्यहिकदेयलाभः। इति स्मृतिः॥

शिखिकण्ठं, क्ली, (शिखिनो मयूरस्य कण्ठ इव नीलाकृतिर्यस्य।) तुत्थम्। इति रत्नमाला॥

शिखिग्रीवं, क्ली, (शिखिनः ग्रीवेव आकृतिर्यस्य) तुत्थम्। इत्यमरः॥

शिखिध्वजः, पुं, (शिखिनो वह्नेर्ध्वज इव।) धूमः। इति त्रिकाण्डशेषः॥ (शिखी मयूरो ध्वजो यस्य।) कार्त्तिकेयः। इति शब्दरत्नावली॥

शिखिनी, स्त्री, (शिखा विद्यतेऽस्याः। इनिः। स्त्रियां ङीप्।) मयूरशिखा। इति राजनिर्घण्टः॥

शिखिपुच्छं, क्ली, (शिखिनः पुच्छम्।) मयूरपिच्छम्। यथा,—

"शिखण्डोऽस्त्री पिच्छवर्हे शिखिपुच्छशिखण्डके॥"

इति शब्दरत्नावली॥

शिखिप्रियः, पुं, (शिखिनः प्रियः।) लगुवदरः। इति राजनिर्घण्टः॥

शिखिमण्डलः, पुं, वरुणवृक्षः। इति शब्दरत्नावली॥

शिखिमोदा, स्त्री, (शिखिनं मोदयतीति। मुद+णिच्+अच्। टाप्।) अजमोदा। इति राजनिर्घण्टः॥

शिखियूपः, पुं, श्रीकारी मृगः। इति राजनिर्घण्टः॥

शिखिवर्द्धकः, पुं, (शिखिनं जठराग्निं वर्द्धयतीति वृध+ण्वुल्।) कुष्माण्डः। इति शब्दरत्नावली॥

शिखिवाहनः, पुं, (शिखी वाहनं यस्य।) कार्त्तिकेयः। इत्यमरः॥

शिखिव्रतं, क्ली, (शिखिनो व्रतम्।) व्रतविशेषः यथा,—

ब्रह्मोवाच।

"वक्ष्ये प्रतिपदादीनि व्रतानि व्यास श्रूयताम्।
प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः।
वैश्वानरपदं याति शिखिव्रतमिदं स्मृतम्॥"

इति गारुडे १२९ अध्यायः॥

शिखी, [न्] पुं, (शिखास्यास्तीति। शिखा+"व्रीह्यादिभ्यश्च।" ५।२।११६। इति इनिः।) मयूरः॥ (यथा, ऋतुसंहारे। १। २८। "शिखिपक्षनिकरं [illegible] करोति शाद-[illegible]॥") अग्निः। (यथा, [illegible]। [illegible]।
"[illegible] च शब्दो च विशति [illegible]
शिखी हतः स्वमभिरिवाज्यसिक्तः॥")
चित्रकवृक्षः। इत्यमरः। बलीवर्द्दः। शरः। केतुग्रहः। द्रुमः। कुक्कुटः। इति मेदिनी॥ घोटकः। इति हेमचन्द्रः। अजलोमा। इति रत्नमाला॥ सितावरः। मेथिका। इति राजनिर्घण्टः॥ पर्व्वतः। ब्राह्मणः। दीपः। इति केचित्॥ शिखायुक्ते, त्रि। इति मेदिनी॥

शिग्रुः, पुं, (शेते खल्वेपि वायौ। शी+"शयाः दयश्च।" उणा० ४।१०२। इति। रः कश्चो गुणागमश्च।) शाकम्। इत्यमरः॥ वृक्षविशेषः। सजिना इति भाषा। तत्पर्य्यायः। हरितशाकः २ शाकपत्रः ३ सुपत्रकः ४ उपदंशः ५ अमादंशः ६ कोमलपत्रकः ७ बहुमूलः ८ दंशमूलः ९ तीक्ष्णमूलः १०। अस्य गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्। तीक्ष्णत्वम्। वातकफमुखजाड्यव्रणदोषहरत्वम्। दीपनत्वम् रुच्यत्वञ्च। तस्य पत्रशाकगुणाः। रुच्यत्वम्। वातकफक्रिमिनाशित्वम्। कटुत्वम्। उष्णत्वम्। दीपनत्वम्। पथ्यत्वम्। पाचनत्वञ्च *॥ अपि च।

"शोभाञ्जनो नीलशिग्रुस्तीक्ष्णगन्धो जनप्रियः।
मुखमोदः कृष्णशिग्रुश्चक्षुष्यो रुचिराञ्जनः॥
शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा
जन्तुवातार्त्तिशूलघ्नश्चक्षुष्यो रोचनः परः॥*॥
श्वेतशिग्रुः सुतीक्ष्णः स्यान्मुखभङ्गः सिताह्वयः।
समूलः श्वेतमरिचो रोचनो मधुशिग्रुकः॥
श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानिलनिकृन्तनः।
अङ्गव्यथाहरो रुच्यो दीपनो मुखजाड्यनुत्॥*॥
रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः।
सुगन्धिः केशरी सिंहो मृगारिश्च प्रकीर्त्तितः॥
रक्तशिग्रुर्महावीर्य्यो मधुरश्च रसायनः।
शोफाश्मानसमीरार्त्तिपित्तश्लेष्मापसारकः॥"

इति राजनिर्घण्टः॥

(ब्राह्मणस्याश्रमिणां तद्भक्षणनिषेधो यथा मनौ ६।१४।
"वर्जयेन्मधुमांसञ्च भौमानि कवकानि च।
भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च॥"
"शिग्रुकं वाह्लीकेषु प्रसिद्धं शाकम्।" इति मेधातिथिकृतटीका॥)

शिग्रुजं, क्ली, (शिग्रोर्ज्जायते। इति। जन+डः) शोभाञ्जनबीजम्। तत्पर्य्यायः। श्वेतमरिचम् २ इत्यमरः॥ शिग्रुभवे त्रि॥

शिग्रुबीजं, क्ली, (शिग्रोर्बीजम्।) शोभाञ्जनबीजम्। इति शब्दचन्द्रिका॥

शिघ, इ आघ्राणे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) इ, शिङ्घ्यते। इति दुर्गादासः॥

शिङ्घाणं, क्ली, (शिघि+आनच् [illegible]) [illegible]

[illegible]

[illegible]

शिङ्घाणकः, पुं, शिङ्घते इति। शिघि+"कृषूर्वीचिमिचावच्च।" उणा० ३। [illegible] आनकः।) श्लेष्मा। इत्युणादिकोषः॥

शिङ्घाणकः, पुं, क्ली, (शिघि+आनकः।) [illegible] मलम्। इत्युणादिकोषः॥

शिङ्घितं, त्रि, (शिघि+क्तः।) [illegible]। [illegible] शब्दरत्नावली॥

शिजि, इ ङ कि ङ अव्यक्तशब्दे। इति कविकल्पद्रुमः॥ (चुरा०-पक्षे भ्वा०-अदा० च-आत्म०-अक०-सेट्।) अव्यक्तशब्दश्चेह भूषणानामेव। भूषणानामेव शिञ्जितमित्यमरात्। [illegible] शिञ्जयते। ङ ङ, शिञ्जते। कि ङ, शिञ्जते मञ्जीरम्। तान्तः शिञ्जयत [illegible] नर्त्तितः कान्तयाने इत्यत्र शिञ्जदिति [illegible] नित्यत्वादिति रमानाथः। वस्तुतस्तु शिञ्जः पचादित्वादम् ततः शिञ्ज इवाचरतीति क्वौ शत्रन्तम्। इति दुर्गादासः॥

शिञ्जा, स्त्री, (शिजि अव्यक्तशब्दे+"गुरोश्च हलः।" ३।३।१०३। इत्यः। टाप्।) भूषण-शब्दः। इति शब्दरत्नावली॥ धनुर्गुणः। इति हेमचन्द्रः॥

शिञ्जितं, क्ली, (शिञ्ज+क्तः।) भूषणध्वनिः। इत्यमरः॥ (यथा,—
"नखानि विधुशङ्कया विरहिणी करेणाक्षिपेत्
ततः किशलयभ्रमात् स्वयमथाचिपद्रक्त।
ततो वलयशिञ्जितं भ्रमरगुञ्जिताशङ्कया
उड्डरिति कुङ्कुरवध्वनिधिया ततो मूर्च्छिता॥"

इत्युद्भटः)

शिञ्जिनी, स्त्री, (शिञ्जति आकृष्टमुक्ता सती शब्दायते इति। शिञ्ज+णिनिः। स्त्रियां ङीप्।) धनुर्गुणः। इत्यमरः॥ नूपुरः। इति [illegible]चन्द्रः॥

शिञ्जी, [न्] त्रि, भूषणशब्दविशिष्टः। [illegible] विद्यतेऽस्य इत्यर्थे इन्प्रत्ययेन निष्पन्नः [illegible]

शिट, अनादरे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) शेटति [illegible] दुर्गादासः॥

शिण्डाकी, स्त्री, खाद्यद्रव्यविशेषः। [illegible]
"शिण्डाकी राजिकायुक्ता: स्याद् [illegible]
सर्षपस्य रसेनापि शालिपिष्टक [illegible]
शिण्डाकी रोचनी गुर्व्वी पित्त [illegible]

इति [illegible]

शितं त्रि, (शो तनूकरणे+क्तः। "शाच्छोरन्यतरस्याम्।" ७।४।४१। इति [illegible]) दुर्ब्बलः। निशितः इति मेदिनी॥ (यथा, रघौ ६।४२।
"धारां शितां [illegible]

[illegible]

"पिण्डं दद्यात् गयाशिरे ।" इति वायुपुराणम् ॥
"शिरो वाटी शिरोऽरण्यो दन्तोवाटी दन्तच्छदा ।"
इति कोषान्तरम् ।") शय्या । अजगरः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

शिरः, [स्] क्ली, ( श्रि + "श्रयतेः स्वाङ्गे शिरः
किच्च ।" उणा० ४ । १९३ । असुन् । स च कित् ।
धातोः शिरादेशश्च । ) शिखरम् । ( यथा,
महाभारते । ४ । ७३ । २ ।
"यथा वक्षेव वै दीर्घं पर्व्वतस्य महच्छिरः ॥")
मस्तकम् । इत्यमरः ॥ ( यथा, लक्ष्मीचरित्रे ।
"शिरः सपुष्पं चरणौ सुपूजितौ ॥" )
नच मासमात्रेण भवति । इति सुखबोधः ॥
तद्रोगनाशकौषधम् । यथा,—
"शिरोरोगहरं लेपात् गुञ्जामूलं सकाञ्जिकम् ।"
इति गारुडे १८८ अध्यायः ॥
प्रधानम् । ( यथा, भागवते । ५ । १४ । ४५ ।
"योगाय सांख्यशिरसे प्रकृतीश्वराय ॥" )
सैनाग्रम् । इति मेदिनी ॥

शिरःकपाली, [न्] पुं, ( शिरःकपालोऽस्यास्तीति ।
इनिः । ) नरमस्तककपालधारी सन्न्यासी । इति
केचित् ॥

शिरःफलः, पुं, ( शिरस्तुल्यं फलं यस्य । ) नारि-
केलः । इति त्रिकाण्डशेषः ॥

शिरःशूलं, क्ली, ( शिरसः शूलम् । ) मस्तक-
वेदनारोगः । ( यथा, कथासरित्सागरे । १३ ।
१५५ ।
"प्रातः सोऽपि शिरःशूलव्यपदेशेन वेष्टनम् ।
कृत्वा प्रच्छादयामास ललाटतटमङ्कितम् ॥")
तस्यौषधं यथा,—
"श्वेतापराजितामूलं पिप्पलीशुण्ठिसंयुतम् ।
मरिचिदं शिरोलेपात् शिरःशूलविनाशनम् ॥"
इति गारुडे १८८ अध्यायः ॥

शिरजः, पुं, ( शिरसो जायते इति । जन + डः । )
केशः । इति शब्दरत्नावली ॥

शिरसिजः, पुं, ( शिरसि जायते इति । जन +
डः । ) केशः । इति जटाधरः ॥ ( यथा,
माघे । ७ । ६२ ।
"श्लथशिरसिजपाशपातभारा-
दिव नितरां नतिमङ्गिरं सभागैः ॥")

शिरसिरुहः, पुं, ( शिरसि रोहतीति । रुह +
कः । ) केशः । इति शब्दरत्नावली ॥

शिरस्कं, क्ली, शिरस्त्राणम् । इति हेमचन्द्रः ॥
शिरःसम्बन्धिनि, त्रि ॥

शिरस्कं, क्ली, ( शिरस्त्रायते इति । त्रै + कः । )
शिरोरक्षकलस्त्राणः । टोप् इति ख्यातः । इत्य-
मरभरतौ ॥ ( यथा, राजतरङ्गिण्याम् । ५ । ४७ ।
"वर्णयन् मध्येऽश्ववाराणां कृत्तवेणाश्ववाजिना ।
वल्गाङ्गुलोदस्यमं शिरस्कं वामपाणिना ॥")

शिरस्त्राणं, क्ली, ( शिरस्त्रायते अनेन । त्रै +
ल्युट् । ) शिरोरक्षकलस्त्राणः । खोपडा इति
टोप् इति च भाषा । तत्पर्य्यायः । शीर्षण्यम् २
शीर्षकम् ३ शिरस्कम् ४ । इति हेमचन्द्रः ॥
शिरस्त्रम् ५ । इत्यमरः ॥ ( यथा, रघौ ।
४ । ६४ ।
"अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ॥")

शिरस्यः, पुं, ( शिरस् + "शरीरावयवाद्यत् ।"
५ । १ । १०३ । इति यत् । ) विशदकचः ।
तत्पर्य्यायः । शीर्षण्यः २ । इत्यमरः ॥ द्वे स्नात-
स्नानादिना वा निर्म्मले अन्योन्यासंपृक्ते केशे ।
इति भरतः ॥

शिरा, स्त्री, धमनिः । इति मेदिनी ॥ शिर इति
भाषा । अस्याः पर्य्यायादिकं नाडीशब्दे द्रष्ट-
व्यम् ॥

शिरापत्त्रः, पुं, ( शिरायुक्तं पत्त्रं यस्य । ) हिन्ताल-
वृक्षः । इति राजनिर्घण्टः ॥ कपित्थः । इति
शब्दचन्द्रिका ॥

शिरालं, क्ली, ( शिराः सन्ति अस्य । "प्राणि-
स्थादातो लजन्यतरस्याम् ।" ५ । २ । ९६ ।
इति लच् । ) कर्म्मरङ्गम् । इति शब्द-
चन्द्रिका ॥ ( शिरायुक्ते, त्रि । यथा, भट्टौ ।
२ । १० ।
"आपिङ्गरूक्षोर्द्ध्वशिरस्यवालैः
शिरालजङ्घैर्गिरिकूटदघ्नैः ॥")

शिरालकः, पुं, ( शिराल इव । कन् । ) अस्थिभङ्ग-
वृक्षः । इति शब्दचन्द्रिका ॥ हाडभाङ्गा इति
भाषा ॥

शिरावृत्तं, क्ली, सीसकम् । इति राज-
निर्घण्टः ॥

शिरिः, पुं, (शृणात्यनेन + "कॄगॄशॄपॄकुटिभिदिछि-
दिभ्यश्च ।" उणा० ४ । १४२ । इति इः । स च
कित् । ) खड्गः । शरः । हिंस्रः । इत्युणादि-
कोषः ॥ शलभः । इति सिद्धान्तकौमुद्यामुणादि-
वृत्तिः ॥

शिरीषः, पुं, (शृणाति झटिति जायतीति । शॄ +
"शॄपॄभ्यां किच्च ।" उणा० ४ । २७ । इति
ईषन् स च कित् । ) स्वनामख्यातवृक्षः । (यथा,
कुमारे । ५ । ४ ।
"पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ॥" )
तत्पर्य्यायः । कपीतनः २ भण्डिलः ३ । इत्य-
मरः ॥ भण्डिरः ४ भण्डीरः ५ भण्डीलः ६ ।
इति तट्टीका ॥ मृदुपुष्पः ७ शुकतरुः ८ विष-
नाशनः ९ । इति रत्नमाला ॥ शीतपुष्पः १०
भण्डिकः ११ स्वर्णपुष्पकः १२ शुकेष्टः १३ बर्ह-
पुष्पः १४ विषहन्ता १५ सुपुष्पकः १६ उद्दा-
नकः १७ शुकतरुः १८ लोमशपुष्पकः १९
कपीतकः २० कलिङ्गः २१ श्यामलः २२
शङ्खिनीफलः २३ मधुपुष्पः २४ वृत्तपुष्पः २५ ।
पुस्तकान्तरे शिखिनीफलः २६ भण्डी २७ श्रवणः
२८ शुकपुष्पः २९ । अस्य गुणाः । कटुत्वम् ।
शीतलत्वम् । विषवातपामाखर्ज्जुकण्डूतिव्रणदोष-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"शिरीषो भण्डिलो भण्डी भण्डीरश्च कपीतनः ।
शुकपुष्पः शुकतरुर्मृदुपुष्पः शुकप्रियः ॥
शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः ।
दोषशोथविसर्पघ्नः कासव्रणविषापहः ॥"
इति भावप्रकाशः ॥ ॥
कण्टकशिरीषस्य पर्य्यायः ।
"कटभी किणिही श्वेता महाश्वेता च रोहिणी ।"
इति रत्नमाला ॥ ॥
अस्य गुणाः ।
"शिरीषो विषवीसर्पखेदत्वग्दोषशोथजित् ।"
इति राजवल्लभः ॥

शिरीषपत्त्रिका, स्त्री, ( शिरीषस्य पत्त्रमिव प[...]
मस्याः । ततः स्वार्थे कन् । टापि अत इत्व[...]
श्वेतकिणिही । इति राजनिर्घण्टः ॥

शिरोग्रहं, क्ली, ( शिरसो ग्रहम् । ) चड्डालि[...]
परिग्रहम् । तत्पर्य्यायः । चन्द्रशाला २ । [...]
हेमचन्द्रः ॥

शिरोग्रीवं, क्ली, शिरश्च ग्रीवा च तयोः सम[...]
हारः । यथा । द्वन्द्वे कत्वं अव्ययीभावश्च [...]
स्यात् द्वन्द्वस्य समासस्य एकत्वं समाहार[...]
इत्यर्थः । यथा, वाक्त्वचं शीतचं पाणि[...]
शिरोग्रीवम् । इति क्लीवलिङ्गसंग्रहटीका[...]
भरतः ॥

शिरोधरा, स्त्री, ( शिरसो धरा । ) ग्रीवा । [...]
हेमचन्द्रः ॥ ( यथा, भागवते । ३ । १७ । [...]
"सङ्गीतवन्नोदनवदुन्नमय्य शिरोधराम् ।
व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्ततः ।"
क्लीवलिङ्गेऽपि दृश्यते । यथा, तत्रैव । १[...]
१३ । ३७ ।
"हीथाशु जक्षोपसदः शिरोधरम् ।")

शिरोधिः, स्त्री, ( शिरो धीयते अनया । धा [...]
"कर्म्मण्यधिकरणे च ।" ३ । ३ । ९३ । इति कि[...]
ग्रीवा । इत्यमरः ॥

शिरोमणिः, पुं स्त्री, ( शिरसो मणिः । ) मस्त[...]
धार्य्यरत्नम् । तत्पर्य्यायः । चूडामणिः २ शिर[...]
रत्नम् ३ । इति शब्दरत्नावली । पण्डित[...]
उपाधिविशेषश्च ॥ ( द्वयोरुदाहरणम् । यथा,
"यस्य सांसारिकी चिन्ता चिन्ता चिन्तामणि[...]
कुतः
तस्यैव हि शिरः कम्पः क्व शिरोमणिधारणम्
इत्युद्भटः । [...]

शिरोमर्म्मा, [न्] पुं, (शिर एव मर्म्म जीवा[...]
यस्य । ) शूकरः । इति हेमचन्द्रः ॥

शिरोरत्नं, क्ली, ( शिरसो रत्नम् । ) शिरोमणि[...]
इत्यमरः ॥

शिरोरुजा, स्त्री, ( शिरसि रुजतीति । रुज [...]
कः । टाप् । ) नागपर्णवृक्षः । इति त्रिका[...]
शेषः ॥ मस्तकरोगश्च ॥

शिरोरुट्, [ह्] पुं, (शिरसि रोहतीति । रुह [...]
क्विप् । ) केशः । इति शब्दरत्नावली ॥

शिरोरुहः, पुं, (शिरसि रोहतीति । रुह + क[...]
केशः । इत्यमरः ॥ ( यथा, भागवते । [...]
२८ । ४४ ।
"चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा [...]

लावणं चीरसर्पिर्भ्यां पानञ्च चीरसर्पिषो: ।
चीरापटैस्तिलै: स्वेदो जीवनीयैश्च शस्यते ॥
भृङ्गराजरसच्छागचीरतुल्यार्कतापित: ॥
सूर्य्यावर्त्ते निहन्त्याशु नस्येनैव प्रयोगराट् ।*।
अर्द्धावभेदके पूर्व्वं स्नेहस्वेदौ हि भेषजम् ॥
विरेक: कायशुद्धिश्च धूमाः स्निग्धोष्णभोजनम् ।
विडङ्गानि तिलान् कृष्णान् समान् पिष्ट्वा
विलेपयेत् ॥
नस्यं वाप्याचरेत्तस्मादर्द्धभेदं व्यपोहति ।
पिबेत् सशर्करं चीरं नीरं वा नारिकेलजम् ॥
सुशीतं वापि पानीयं सर्पिर्व्वा नस्ततस्तयो: ॥"
नस्तत: नासिकया पिबेदित्यन्वय: । तयो:
सूर्य्यावर्त्तार्द्धभेदयो: ॥ * ॥
"अनन्तवाते कर्त्तव्य: सूर्य्यावर्त्तहितो विधि: ।
शिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥
आहारश्च प्रदातव्यो वातपित्तविनाशन: ।
मधुमस्तकसंयावघृतपूपैश्च शस्यते ॥"
संयाव: पक्वान्नविशेष: । एरकिया इति लोके ।
स च मधुमस्तक: मधुनोपलिप्त: । घृतपूरो-
ऽपूप: ।
"पथ्याक्षधात्री रजनी गुडूची
भूनिम्बनिम्बै: सगुड: कषाय: ।
भ्रूशङ्खकर्णाक्षिशिरोऽर्द्धशूलं
निहन्ति नासानिहित: क्षणेन ॥"
इति पथ्यादिक्वाथ: ॥ * ॥
"दार्व्वी हरिद्रा मञ्जिष्ठा सनिम्बोशीरपद्मकम् ।
एतत्प्रलेपनं कुर्य्याच्छङ्खकस्य विनाशयेत् ॥
शीततोयाभिषेकश्च शीतलचीरसेवनम् ।
कल्केन चीरवृक्षाणां शङ्खके लेपनं हितम् ॥"
सर्व्वेषु ।
"यष्टीमधुकमाष: स्यात् तूर्य्यांशस्तु विषम्भवेत् ।
तयोश्चूर्णन्तु कर्त्तव्यं स्यात्चूर्णं सर्पिषोक्षितम् ॥
नासिकाभ्यन्तरं न्यस्तं सर्व्वां शीर्षव्यथां हरेत् ।
हरप्रयोगो योगोऽयमश्विभ्यामभिराहृत: ॥
आर्द्रं वत्सकिकाचूर्णं चूर्णितं नवसादरम् ।
उभयं योजितं गन्धात्तस्य नश्यति शीर्षरुक् ॥"
इति भावप्रकाशे शिरोरोगाधिकार: ॥
शिरोऽर्त्ति:, स्त्री, (शिरसोऽर्त्ति: ।) शिर:पीडा ।
इति लोके प्रसिद्धि: ॥ (यथा, कथासरित्सागरे ।
११ । १६२ ।
"जागरेणातिपानेन शिरोऽर्त्तिं व्यपदिश्य च ।
प्रात: स तस्थौ शय्यायां वेष्टयित्वाङ्गिलं शिर: ॥")
शिरोपत्री, स्त्री, (शिरसो पत्नीव ।) वाहंपूता ।
इति शब्दचन्द्रिका ।
शिरोवृत्तं, क्ली, (शिर इव वृत्तम् ।) मरिचम् ।
इति राजनिर्घण्ट: ।
शिरोहृत्पद्म:, पुं, (शिरसि हृत्तं पत्रं यस्य ।)
रक्तापामार्ग: । इति भावप्रकाश: ।
शिरोवेष्ट:, पुं, (शिरो वेष्टयतीति । वेष्ट + अच् ।)
उष्णीष: । इति त्रिकाण्डशेष: ।
शिरोवेष्टनं, क्ली, (शिरो वेष्ट्यतेऽनेनेति । वेष्ट +
ल्युट् ।) शिर:प्रावरणम् । पागडी इति भाषा ।
तत्पर्य्याय: । उष्णीष: २ वेष्टनम् ३ वेष्टकम् ४ ।
इति शब्दरत्नावली । शिरोवेष्ट: ५ पेचो-
लक: ६ । इति त्रिकाण्डशेष: ॥
शिरोऽस्थि, क्ली, (शिरसोऽस्थि ।) मस्तकास्थि ।
माथार खुलि इति भाषा । तत्पर्य्याय: ।
करोटि: २ शिरस्त्राणम् ३ शीर्षकम् ४ । इति
राजनिर्घण्ट: ॥
शिल, श उञ्छे । इति कविकल्पद्रुम: ॥ (तुदा०-
पर०-सक०-सेट् ।) उञ्छ उद्धृतशस्यशेषाहर-
णम् । श, शिलति धान्यं दीन: । शिलिता ।
इति दुर्गादास: ॥
शिल:, पुं, क्ली, (शिल + क: ।) उञ्छ: । इति
मेदिनी ॥ (यथा, भागवते । ११ । १७ । ४१ ।
"अन्याभ्यामेव जीवेत शिलैर्व्वा दोषहक्
तयो: ॥")
जीवनोपायविशेष: । यथा,—
"ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥"
इति मानवे ४ अध्याय: ॥
"अवाधितस्थानेषु पथि वा क्षेत्रेषु वा अप्रति-
हतावकाशेषु यत्र यत्रौषधयो विद्यन्ते तत्र
तत्राङ्गुलीभ्यां एकैकं कणं समुच्चयित्वा इति
बौधायनदर्शनात् । एकैकधान्यादिगुडकोच्चय-
मुञ्छ: । मञ्जर्य्यात्मकानेकधान्योच्चयनं शिल: ।
उञ्छश्च शिलञ्च इत्येकवद्भाव: । तत् सत्यसमान-
फलत्वादृतमित्युच्यते ।" इति तट्टीकायां कुल्लूक-
भट्ट: ॥ (रघुवंशीयपारियात्रनृपपुत्र: । यथा,
रघुवंशे । १८ । १७ ।
"तस्याभवत् सूनुरुदारशील:
शिल: शिलापट्टविशालवक्षा: ॥")
शिलगर्भज:, पुं, पाषाणभेदक: । इति राज-
निर्घण्ट: ।
शिला, स्त्री, पाषाण: । (यथा, मनौ । २ ।
२०४ ।
"गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥")
द्वाराध:स्थितदारु । इत्यमर: ॥ स्तम्भशीर्षम् ।
मन:शिला । इति मेदिनी ॥ कर्पूर: । इति
राजनिर्घण्ट: ॥
शिलाकर्णी, स्त्री, (शिलेव कर्ण: कोषो यस्या: ।
ङीष् ।) शल्लकीवृक्ष: । इति शब्दचन्द्रिका ।
शिलाकुट्टक:, पुं, (शिलां कुट्टयति दारयतीति ।
कुट्ट + ण्वुल् ।) टङ्क: । इति शब्दरत्नावली ॥
शिलाजं, क्ली, (शिलाया जायते इति । जन +
ड: ।) शैलेयम् । इति शब्दचन्द्रिका । लौहम् ।
इति राजनिर्घण्ट: ॥
शिलाजतु, क्ली, (शिलाया जतु ।) पर्व्वतजातो-
पधातुविशेष: । शिलाजित् इति हिन्दीभाषा ।
तत्पर्य्याय: । गैरेयम् २ अर्थ्यम् ३ गिरिजम् ४
अश्मजम् ५ । इत्यमर: ॥ शिलाजम् ६ जतुजम्
७ शैलम् ८ अग्निजम् ९ । इति रत्नमाला ।
शैलेयम् १० शैलधातुजम् ११ । इति शब्द-
चन्द्रिका । शिलाव्याधि: १२ । इति त्रिकाण्ड-
शेष: । अश्मोत्थम् १३ अश्मकादि १४ ...
जतुकम् १५ अगजम् १६ । अस्य गुणा: ।
तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । रसायन...
मेहोन्मादाश्मरीशोफकुष्ठापस्मारनाशित्वं ...
इति राजनिर्घण्ट: ॥ अपि च । सर्व्वरोग...
रोगहरत्वम् । योगवाहित्वम् । बलपुष्टि...
करत्वञ्च । इति राजवल्लभ: ॥ अन्योन्यवि...
अस्य गुणा: ।
"निदाघे घर्म्मसन्तप्ता धातुसारं धराधरा: ।
निर्य्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम् ।
सौवर्णं राजतं ताम्रं आयसं तच्चतुर्व्विधम् ।
शिलाजत्वन्यदप्यस्ति यच्छैलेयमिति स्मृतम्? ।
गैरेयमश्मजञ्चापि गिरिजं शैलधातुजम् ।
शिलाजं कटुतिक्तोष्णं कटुपाकं रसायनम् ।
छेदि योगवहं हन्ति कफमेदोऽश्मशर्करा: ।
मूत्रकृच्छ्रं क्षयं श्वासं वाताशांसि
पाण्डुताम् ।
अपस्मारं तथोन्मादं शोथकुष्ठोदरक्रिमीन् ।
सौवर्णन्तु जवापुष्पवर्णं भवति तद्रसात् ।
मधुरं कटुतिक्तञ्च शीतलं कटुपाकि च ।
राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च ।
ताम्रं मयूरकण्ठाभं तीक्ष्णं उष्णं भवेत् ।
विपाके कटुकं शीतं सर्व्वश्रेष्ठतमाहृतम् ।"
इति भावप्रकाश: ।
शिलाञ्जनी, स्त्री, (शिलामञ्जयतीति । अञ्ज +
ल्यु: । स्त्रियां ङीप् ।) काकाञ्जनीवृक्ष: । इति
राजनिर्घण्ट: ॥
शिलाटक:, पुं, (शिलामटतीति । अट + ण्वुल् ।)
अट्ट: । बिलम् । इति मेदिनी ।
शिलात्मजं, क्ली, (शिलाया आत्मजमिव ।)
लौहम् । इति राजनिर्घण्ट: ॥
शिलात्मिका, स्त्री, मूषा । इति शब्दचन्द्रिका ।
शिलाददु:, पुं, (शिलाया ददुरिव ।) शैलेय...
इति राजनिर्घण्ट: ॥
शिलाधातु:, पुं, (शिलायां धातु: ।) ख...
पक्ष: । इति त्रिकाण्डशेष: । खड़ी इति भाषा ...
गैरिकभेद: । स तु पीतवर्ण: । इति रा...
निर्घण्ट: ॥
"सितोपल: शिलाधातुर्व्वर्णलेखा च ...
शिलाधातुविशेषस्तु विज्ञेयो लोकभाष...
इति शब्दरत्नावली ...
शिलापट्ट:, पुं, (शिलाया: पट्ट: ।) ...
शिला । शिल् इति भाषा । इति कोषः? ।
शिलापुत्र:, पुं, (शिलाया: पुत्र इव ।) ...
शिला । लोड़ा इति भाषा । तत्पर्य्याय: । ...
वाक: २ शिलापुत्रक: ३ । इति शब्द...
वली ॥
शिलापुष्पं, क्ली, (शिलाया: पुष्पमिव ।) शै...
यम् । इति राजनिर्घण्ट: ॥

ईशानवायू चरकी द्वितीये
विदारिका पूतनिका तृतीये ।
पापाभिधा मारुतकोणके तु
पूज्याः सुरा उक्तविधानतस्तु ॥ * ॥
ब्रह्मा नवपदस्तु तेन समकाः देवार्य्यमाद्यास्त्वमी
कोणेऽष्टौ द्विपदास्तथाष्टमरुतः कोणेऽर्द्धभागाद्‌
बहिः ।
शेषा एकपदाः सुरास्तु कथिता वेदर्तुके-६४
ऽथो नव
ब्रह्मा षट्पदिनोऽर्य्यमादिविबुधा ईशादयश्चै-
कशः ॥
ब्रह्मा कलांशो वसुतोऽर्य्यमाद्याः
कोणेऽष्ट चार्द्धेऽपि च सार्द्धभागाः ।
विधात्बकोणे द्विपदास्तथाष्टौ
शेषाः सुरा एकपदाः शतांशे ॥*॥
ब्रह्माब्धिनांश८४ उदितः शिवतोऽर्य्यमाद्याः
कोणेषु सार्द्धपदतोऽपि तथैव चाष्टौ ।
शेषा द्विभागसमकाः रविभागकोऽयं
पूज्यो रथाश्वगजवाहनकेऽम्बुयन्त्रे ॥
यन्त्रे नयोदशपदैरपि पूजनीय-
स्तत् पञ्चविंशतिरजो दशतोऽर्य्यमाद्याः ।
कोणेऽष्टयोऽमरगणा बहिरेके कलांशा
अद्रेऽष्टिकं रविविभागपरे द्विभागाः ॥*॥
द्वात्रिंशत् कमलासनोऽर्य्यमसुखाः स्युः षड्-
भागा क्रमात्
कोणेऽष्टयेऽष्टसुरा द्विभागसहिता बाह्येषु
सार्द्धांशकाः ।
अष्टौ रामपदाः पुनर्द्विपदकाः षड्भागिनोऽष्टौ
सुराः
चैके नवनवचन्द्रभागसहिते १९६ स्याद्देवतानां
क्रमः ॥ * ॥
वेदांशो विधिरर्य्यमप्रभृतयस्त्र्यंशा नवस्वष्टके
कोणेऽष्टयेऽष्टपदार्द्धगाः परसुराः षड्भागहीने
पदे ।
वास्तोर्नन्दयुगांश ४९ एवमधुनाष्टांशेश्चतुः-
षष्टिके
सन्धेः खण्डमितान् सुधीः परिहरेच्छिन्तोस्तुलाः
स्तम्भकान् ॥ * ॥
रेखाद्वयं कोणगतं विधेय-
मंशान्तरेणैव तु कर्णसूत्रात् ।
यदष्टकर्णैः कथितं तु पद्मं
तत्पीड़नात् स्वामिधनप्रणाशः ॥
प्रोक्तं चतुर्व्विंशतिलाङ्गुलं यत्
पादार्द्धगं चाग्निकरं प्रजायाः ।
षड्भिस्तु कर्णैर्मरणाय वर्णं
कोणे त्रिशूलञ्च रिपोर्भयाय ॥
परीक्ष्य भूमीमवसेचयेत्तां
सुपञ्चगव्येन ततो विलेख्या ।
रेखा सुवर्णेन मणिप्रवालैः
पिष्टाक्षतैर्व्वापि पुनर्ककुर्ये ॥
द्वात्रिंशद्रेखाः पृथुले च दैर्घ्ये

एतत्पदानां कथितं सहस्रं
शिवञ्च सर्व्वोत्तममेव वास्तोः ॥ * ॥
मध्ये ब्रह्मा पूजनीयः शतांशै-
श्चत्वारिंशद्भिः पदैर्व्वाद्यवीथी ।
प्रोक्ता देवा अर्य्यमाद्या अशीत्या
मध्ये कोणेऽष्टौ शतं चाष्टधा ॥
कोणेऽष्टयो नन्दपदैः सुराश्च
शेषाश्च बाह्ये वसुभागिनश्च ।
वीथी च बाह्ये रविभागयुक्तं
शतं पदानां कथितं मुनीन्द्रैः ॥
दुर्गप्रतिष्ठाविषये निवेशे
तथा महार्णवेषु च कोटिहोमे ।
मेरौ च राष्ट्रेष्वपि ज्येष्ठलिङ्गे
वास्तुः सहस्रेण पदैः प्रपूज्यः ॥*॥
त्रिमेखलं शङ्करदिग्विभागे
कुण्डं प्रकुर्य्यात् करतो युगास्रम् ।
होमं सुराणां शतमष्टयुक्तं
प्रत्येकमष्टाधिकविंशतिं वा ॥
मध्वाज्यदुग्धैर्दधिशर्कराभ्यां
लाजैस्तिलैर्व्रीहियवैर्नवान्नैः ।
पलाशदूर्व्वाङ्कुरदुग्धवृक्षै-
र्होमं तदन्ते सुरपूजनञ्च ॥
ईशे घृताक्तमपरे चरुतोदनञ्च
दद्याज्जयाय हरिताम्बरमेव कुम्भम् ।
रत्नानि पिष्टकमयं कुलिशं सुरेन्द्रे
धूम्रं वितानमुदितञ्च दिवाकरस्य ॥
गोधूमयुक्तं घृतमेव सत्ये
मत्स्यान् भृशे शष्कुलिमन्तरीक्षे ।
वह्नौ स्रुवं पूष्णि तथैव लाजा
दद्याद्धर्म्मे चरुकौदनञ्च ॥
मध्वन्नञ्च गृहक्षताय यमतो मांसौदनं दापयेत्
गन्धर्व्वे शतपत्रमोदनयुतं भृङ्गेऽजजिह्वा तथा ।
प्रोक्ता नीलजवा मृगाय पितृतो देयाश्च सन्मो-
दकाः
पेटं दन्तधावनं तथैव विधिवद्दद्याच्च दौवारिके ।
सुग्रीवाय च पूपका गणवरे श्वेतप्रसूनं पयः
पद्मं वारुणके सुराप्यसुरके तैलं तिलाः शोषके ।
पापाख्येऽपि च पक्वमांसमुदितं रोगाय सर्व्वौ-
षधीः
गोक्षीरं फणिने च मुख्यविबुधे श्रीखण्डभक्ते
तथा ।
भल्लाटाय सुवर्णकं धनपतौ मत्स्यान्वदुग्धं तथा
शक्तून् पर्व्वतकेऽदितेस्तु लपिकां दद्याद्दितौ
पूरिकाम् ।
सक्षीरं दधिकं क्रमेण विहितं त्वापापवत्से तथा-
प्यर्य्यम्णेऽदवचन्दनञ्च मदवा [illegible] तथा
शर्करा ।
सावित्रेऽपि च लड्डुकाश्च सवितुः पुष्पा गुडा
सद्गुड़ा
देयं वाय विवस्वते घृतयुतं दुग्धं तथा मोदकाः ।
इन्द्राख्ये कुसुमस्वजिन्नजयके देयं तथा चम्पकं

तस्मिन्नप्यसमस्तवापि वासरे
गव्यंशमांसं पृथिवीधराय ।
पयस्तथा ब्रह्मपतं षडष्ट
दद्यादिशौ सर्व्वसमोऽधिदैवतः ।
सुराश्च मांसं विहितं चरकै
तथैव पीतौदनकौ विदार्य्यै ।
रक्तौदनैः पूतनिकार्च्चनीया
मत्स्यासवेनापि तथैव पापा ॥
मांसं पक्वं पिलिपिञ्जाय तच्चजम्भाय विहितं
वदः ।
स्कन्दाय तन्मदिरायुक्तं चार्य्यम्णे दिश्
पूर्णारो ।
यः पूजयेद्वास्तुमनन्यबुद्धा
न तस्य दुःखं भवतीह किञ्चित् ।
जीवत्यसौ वर्षशतं सुखेन
स्वर्गे नरस्तिष्ठति कल्पमेकम् ।”
इति श्रीसूत्रधारमण्डनविरचिते वास्तुशा
राजवल्लभे वास्तुलक्षणम् २ [ अध्यायः । * ।
“आयर्क्षव्ययतारकांशकविधुं राशिं दशा
तथा
धान्यं सौख्ययशोऽभिवृद्धिरधिका सत्यादयः
यते ।
आयास्तु ध्वजधूमसिंहशुनका गोरासभेभा
क्रमात्
ध्वाङ्क्षस्त्वष्टम आयभेषु विषमाः श्रेष्ठाः सुरा
यो ।
मानं देवगृहादिभूपसदने प्राच्योत्तरे
गेहे कर्म्मकरस्य नायकरतः प्राच्येव देवं
अथो दस्तकरात्कुलादिमपि ते हस्तात्पूर्वेरा
शिवस्याप्यनुमानतोऽपि नगरे दक्षेन मानं
आयः कल्प्यो हस्तमेयैः करेष
चैषे मात्राभिर्म्मिते मात्राभिः ।
मध्ये पर्य्यङ्कासने मन्दिरे च
देवागारे मण्डपे भित्तिबाह्ये ।
कृते देवगृहे द्विजस्य भवने स्याद्दिवा
विस्तारोच्छ्रयस्य भूपसमठागारेषु
धूमो वह्निपचौविनामपि यदि [illegible]
[illegible]
सिंहद्वारनृपालयेऽसनिचये सिंहश्च सिं
[illegible]
चक्रादि शुनको विधातु दृषभो [illegible]
[illegible]
वाणिज्ये वनभोजनस्य भवनेऽपो
[illegible]
वाहिके खरजीविनामपि यदि [illegible]
[illegible]
याने क्षीरगृहादिके च [illegible]
[illegible]
आहुः शिल्पिनपण्डिता [illegible]
[illegible]
आहुः [illegible]
[illegible]

अस्य पुरश्चरणं षट्त्रिंशल्लक्षजपः । १० । * ।
अथास्य ध्यानमन्त्रः ।
"अर्घीशो वह्निशिखरो वामाक्षो दान्त ईरितः ।
षडक्षरात्मकमन्त्रोऽयं चिन्तामणिः समीरितः ॥"
ऊर्ह्रूं षट् इति मन्त्रः । अस्य पूजा । प्रातः-
कृत्यादिशैवोक्तपीठन्यासान्तं विधाय ऋष्यादि-
न्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत् ।
"चण्डेश्वरं रक्ततनुं त्रिनेत्रं
रक्तांशुकाढ्यं हृदि भावयामि ।
टङ्कं त्रिशूलं स्फटिकाक्षमालां
कमण्डलुं बिभ्रतमिन्दुचूडम् ॥"
एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनादिशैवोक्त-
पीठपूजान्तं विधाय ऊमिति बीजेन मूर्त्तिं सं-
कल्प्य पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदान-
पर्य्यन्तं विधायावरणपूजां कृत्वा धूपादिविसर्ज्ज-
नान्तं कर्म्म समापयेत् । अस्य पुरश्चरणं
त्रिलक्षजपः । अयं चण्डेश्वरः । ११ । इति
तन्त्रसारे शिवमन्त्राः । * । * । विष्णुशिवयोर-
भेदो यथा,—

वराह उवाच ।

"शिवो मे दक्षिणं स्थानं तिष्ठते विगतज्वरः ।
लोकानां प्रवरः श्रेष्ठः सर्व्वलोकवरो हरः ॥
तं ये विन्दन्ति ते देवि ! नूनं मामेव विन्दति ।
ये मां विन्दन्ति देवेशि ! ते विन्दन्ति शिवं
परम् ॥
अहं यत्र शिवस्तत्र शिवो यत्र वसुन्धरे ।
अहं तत्रापि तिष्ठामि आवयोर्नान्तरं क्वचित् ॥
शिवं यो वन्दते भूमे ! स हि मामेव वन्दते ।
लभते पुष्कलां सिद्धिमेवं यो वेत्ति तत्त्वतः ॥"
इति वाराहे शालग्राममण्डलमाहात्म्यवर्णनकामा-
ध्यायः । * । देवीविष्णुशिवानामभेदो यथा,—
"अयं नारायणो गौरी जगन्माता सनातनः ।
विभज्य संस्थितो देवः स्वात्मानं बहुधेश्वरः ॥
न मे विदुः परं तत्त्वं देवाद्या न महर्षयः ।
एकोऽयं देवदेवात्मा भवानी विष्णुरेव च ॥
अहं हि निष्क्रियः शान्तः केवलो निष्परिग्रहः ।
मामेव केशवं देवमाहुर्द्देवीमथाम्बिकाम् ॥"
इति कौर्म्मे १४ अध्यायः । * ।
शिवनिन्दानिषेधो यथा,—
"परात् परतरं यान्ति नारायणपरा जनाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥
ध्यानं होमस्तपस्तप्तं ज्ञानं यज्ञादिको विधिः ।
तेषां विनश्यति क्षिप्रं ये निन्दन्ति पिनाकिनम् ॥
यो मां समाश्रयेन्नित्यं एकान्तं भावमाश्रितः ।
विनिन्द्य देवमीशानं स याति नरकायुतम् ॥
तस्मात् सा परिहर्त्तव्या निन्दा पशुपतेर्द्विज ।
कर्म्मणा मनसा वाचा तद्भक्तेष्वपि यत्नतः ॥"
इति कौर्म्मे २५ अध्यायः । * ।
तस्य प्रलयकारकत्वं यथा,—
"गते परार्द्धद्वितये काले लोकप्रकालकः ।
कालाग्निर्भस्मसात् कर्त्तुं करोति निखिलं
मतिम् ।
स्वात्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः ।
दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् ॥
तमाविश्य महादेवो भगवान्नीललोहितः ।
करोति लोकसंहारं भीषणं लोकमाश्रितः ॥
प्रविश्य मण्डलं सौरं कृत्वासौ बहुधा पुनः ।
निर्द्दहत्यखिलं लोकं सप्तसप्तिस्वरूपधृक् ॥
स दग्ध्वा सकलं सत्त्वमस्त्रं ब्रह्मशिरो महत् ।
देवतानां शरीरेषु क्षिपत्यखिलदाहकः ॥
दग्धेष्वशेषदेवेषु देवी गिरिवरात्मजा ।
एका सा साक्षिणः शम्भोस्तिष्ठते वैदिकी श्रुतिः ॥
शिवः कपालैर्द्देवानां कृतस्रग्वरभूषणः ।
आदित्यचन्द्रादिगणैः पूरयन् व्योममण्डलम् ॥
सहस्रनयनो देवः सहस्राकृतिरीश्वरः ।
सहस्रहस्तचरणः सहस्रार्च्चिर्महाभुजः ॥
दंष्ट्राकरालवदनः प्रदीप्तानललोचनः ।
त्रिशूलकृत्तिवसनो योगमैश्वरमाश्रितः ॥
पीत्वा तत् परमानन्दं प्रभूतममृतं स्वयम् ।
करोति ताण्डवं देवमालोक्य परमेश्वरः ॥
पीत्वा नृत्यामृतं देवी भर्त्तुः परममङ्गला ।
योगमास्थाय देवस्य देहमायाति शूलिनः ॥
स भुक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् ।
याति ज्योतिः स्वभावं भगवान् दग्ध्वा ब्रह्माण्डमण्डलम् ॥
संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु ।
गुणैरशेषैः पृथिवी विलयं याति वारिषु ॥
सवारितत्त्वं सगुणं ग्रसते हव्यवाहनः ।
तेजः सगुणसंयुक्तं वायौ संयाति संक्षयम् ॥
आकाशे सगुणो वायुः प्रलयं याति संक्षयम् ।
भूतादौ च तथाकाशं लीयते गुणसंयुतम् ॥
इन्द्रियाणि च सर्व्वाणि तैजसे यान्ति संक्षयम् ।
वैकारिके देवगणा प्रलयं यान्ति सत्तमाः ॥
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ।
त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत् ॥
महान्तमेभिः सहितं ब्रह्माणममितौजसम् ।
अव्यक्तं जगतो योनिः संहरेदेकमव्ययः ॥
एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः ।
वियोजयति चान्योन्यं प्रधानं पुरुषं परम् ॥
प्रधानपुंसोरजयोरेष संहार ईरितः ।
महेश्वरेच्छाजनितो न स्वयं विद्यते लयः ॥
गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते ।
प्रधानं जगतो योनिर्मायातत्त्वमचेतनम् ॥
कूटस्थश्चिन्मयो ह्यात्मा केवलः पञ्चविंशकः ।
गीयते मुनिभिः साक्षी महानेकः पितामहः ॥
एवं संहारकरणी शक्तिर्माहेश्वरी ध्रुवा ।
प्रधानाद्यं विशेषान्तं दहेद्रुद्र इति श्रुतिः ॥
योगिनामथ सर्व्वेषां ज्ञानविन्यस्तचेतसाम् ।
आत्यन्तिकञ्चैव लयं विदधातीह शङ्करः ॥"
इति कौर्म्मे उपविभागे ४६ अध्यायः । * ।
ब्रह्मविष्णुशिवानामभेदो यथा,—

श्रीभगवानुवाच ।

"न ब्रह्मा भवतो भिन्नो न शम्भुर्मत्तरक्षया ।
न चाहं युवयोर्भिन्नो व्यभिन्नं सनातनम् ॥
प्रधानश्चाप्रधानञ्च आत्मा भावश्च व्यक्तिः ।
[illegible]
[illegible]
[illegible]
चिन्तयन् [illegible]
एकत्वं [illegible] कुरु ।
शिरोग्रीवादिभेदेन यथैकस्य शरीरिणः ।
अङ्गानि मे तथैकस्य भागत्रयमिदं हर ॥
यज्ज्योतिरव्यक्तमपरप्रकाशं
कूटस्थमव्यक्तमनन्तरूपम् ।
नित्यञ्च दीर्घादिविशेषवाह्य-
र्व्वीनं परं तत्र वयं न भिन्नाः ॥"
इति कालिकापुराणे ११ अध्यायः ।
अपि च ।
"ततो ब्रह्मा च शारीरं नित्या चण्डी महेश्वर
प्रधानेच्छावशाच्छम्भो त्रिगुणं त्रिगुणोत्तमम् ।
तदूर्द्ध्वभागः संजातश्चतुर्व्वक्त्रश्चतुर्भुजः ।
पद्मकेशरगौराङ्गकायो ब्रह्मा महेश्वर ॥
मध्यभागो नीलाङ्ग एकवक्त्रश्चतुर्भुजः ।
शङ्खचक्रगदापद्मपाणिः कायः स वैष्णवः ।
अभवत्तदधोभागः पञ्चवक्त्रश्चतुर्भुजः ।
स्फटिकाभ्रसमः कायः शुक्लः स चन्द्रशेखरः ।
देहस्ततो ब्रह्मकाये सृष्टिशक्तिं न्ययोजयत् ।
स्वयमेवाभवत् स्रष्टा ब्रह्मरूपेण लोकधृक् ।
स्थितिशक्तिं नियां मायां प्रत्यक्षाणां न्ययो-
जयत् ।
महेशो वैष्णवे काये ज्ञानशक्तिं नियां तथा ।
स्थितिकर्त्ता भवेद्विष्णुरहमेव महेश्वरः ।
सर्व्वशक्तिनियोगेन सदा तद्रूपता मम ।
अन्तशक्तिं तथा काये शाम्भवे संन्ययोजयत् ।
अन्तकर्त्ता भवेच्छम्भुः स एव परमेश्वरः ।
ततस्त्रिषु शरीरेषु स्वयमेव प्रकाशते ।
ज्ञानरूपं परं ज्योतिरनादिर्भगवान् प्रभुः ।
सृष्टिस्थित्यन्तकरणादेक एव महेश्वरः ।
ब्रह्मा विष्णुः शिवश्चेति संज्ञामाप पृथक् पृथक् ।
अतश्च विधाता च तथाहमपि च पृथक् ।
एवं शरीरं रूपञ्च ज्ञानमज्ञानमन्तरम् ।"
इति तत्रैव १२ अध्यायः । * ।

मार्कण्डेय उवाच ।

"ततो ब्रह्माण्डसंस्थानं दर्शयामास शङ्करे ।
सदृशे तोयराशिस्थं ब्रह्माण्डं यथा पुरा ।
तन्मध्ये सद्मगर्भाभं ब्रह्माणं जगतः पतिम् ।
ज्योतीरूपं प्रकाशार्थं ब्रह्माण्डस्य [illegible] ।
शरीरिणं च ददृशे ब्रह्माण्डान्तर्गतं प्रभुः ।
चतुर्भुजं प्रकाशन्तं ज्योतिर्भिः [illegible] ।
तत्रैव च त्रिधाभूतं चतुर्व्वक्त्रं ददर्श च ।
ऊर्द्धमध्याग्रभागेषु ब्रह्मविष्णुशिवात्मकम् ।
अधोभागो वपुषो [illegible]
मध्यभागा विष्णुभूतो [illegible]
एकमेव शरीरन्तु त्रिधाभूतं [illegible]
ततो ददर्श [illegible]
कदाचित् [illegible]
[illegible]

शारभं देहमपि यातो यामेव भावय शङ्करम् ।
शरभञ्जीवतो शम्भुर्देवकाय चतुर्भुजः ।
हरञ्च वामदेवोऽपि भिन्नमाच्यपवसतम् ।
शरभावपि शङ्करं जीवतो तद्युध वत् ॥"

इति कालिकापुराणे १६ अध्यायः ॥ ० ॥

अथ शरभरूपधारणकारणं यथा,—
"इति तेषां विनयतां श्रुत्वा वाक्यं धर्मात्मजैः ।
उवाच शङ्करं देवं ब्रह्माणञ्च विशिष्टतः ॥
अनन्ते दैवताः सर्व्वाः प्रजाश्च सकला इमाः ।
प्राप्नुवन्ति महद्दुःखं प्रीणन्ति सकलं जगत् ॥
वाराहं सकलं कायं त्यक्तुमिच्छामि शङ्कर ।
त्वं ज्ञापय तत् कार्यं यथात्मा शङ्कराधुना ॥
समाप्याश्च तेजोभिर्बलम् करवरं प्रभुः ।
वायावन्तु तदा देवाः शङ्करो वसु पोषितम् ॥
वासुदेवोऽपि तान् सर्व्वान् विसृज्य चिरन्तौ-
सदा ।
वाराहं तेजसा हर्त्तुं स्वयं ध्यानपरोऽभवत् ।
ध्रुवैः प्रवेश्या तेज आहरत्येव माधवः ।
तदा देहम् वाराहं सत्त्वहीनं व्यजायत ॥
तेजोहीनं यदा देहं ज्ञातं सर्व्वैरथामरैः ।
वाचयाद महादेवो यज्ञवाराहमद्भुतम् ॥
ब्रह्माद्याश्चित्रसाः सर्व्वे महादेवसमापतिम् ।
अपुनत्यस्तदा तेन आधातुं शरणाग्रने ॥
ततः सर्व्वैर्देवसङ्घैः स्वं स्वं तेजो वृषध्वजे ।
चाददे तेन बलवान् सोऽसौव समजायत ॥
ततः शरभरूपी स तत्क्षणाच्छिरशोऽभवत् ।
जटाधोभागतश्चाष्टपादयुक्तः सुभैरवः ।
दिव्यचौजनोच्छ्रायः सहस्रैकविस्तृतः ॥"

इति कालिकापुराणे २९ अध्यायः ॥

अथ विवाहो यथा,—

ईश्वर उवाच ।

"हिताय सर्व्वजगतां सम्भोगायात्मनस्तथा ।
दारान् ग्रहीतुमिच्छामि तथा सन्तानहेतवे ॥
यावाश्च तव कन्येयं भवन्तो मम साम्प्रतम् ।
मदर्थे तनयां कालीं याचध्वन्तु हिमाचलम् ॥

मार्कण्डेय उवाच ।

हरं नत्वाथ मुनयो जग्मुस्ते गिरिराजयम् ।
तेन संपूजितास्ते तु प्रोचुस्ते मुनयो गिरिम् ॥
शशिशेखरो देवो देवदेवश्च यो मतः ।
ब्रह्मादयश्च यो भक्तो स एको जगतां पतिः ॥
यः संहरति सर्व्वाणि जगन्ति प्रलयोद्भवे ।
यो विभूतिप्रदो भक्ते नानारूपो मनोहरः ॥
स ते दुहितरं कालीं भार्यामादातुमिच्छति ।
यदि यच्छति मद्वाक्यं वरं त्वं दुहितुः समम् ।
तदा प्रयच्छ तनयां कालीं शम्भवे गिरे ! ॥

मार्कण्डेय उवाच ।

इत्युक्तोऽमितिप्रियवरं बहुहर्षाञ्चितम् ।
दुहितुश्च शिवं ज्ञात्वा प्राप्यं तपसा तदा ॥
राज्ञापि सदैवं तुष्टौ तुष्टाभिः प्रार्थित-
वाहम् ।
[illegible] तपसा तस्य परितोषितः ॥
[illegible] कालीं [illegible] ।



सोऽप्यस्य प्रार्थितुं यतः तुष्टो मम शिवा
हरात् ॥
हरेराहवनीता वा तामत्र सः समुत्सृजेत् ।
हरं गृहीत्वा सगणा मान्यं कालीह वाञ्छति ॥
इत्युक्त्वा मेनया साद्धं सुतां दातुञ्च शम्भवे ।
अङ्गीकृत्य विवाहाय मुनयोऽमुं महेश्वरम् ॥
ते सप्त मुनयः सर्व्वे मरीचिप्रमुखा द्विजाः ।
प्रोक्तवन्तो यथावच्च तत्पुनर्देवमादरे ॥
हिमवत्कन्यकां दातुं तुष्यस्त्ववधि हर ।
यदिदानीं यथा कर्त्तुं युज्यते त्रिभवनाम् तत् ॥
अस्माभिर्नाप्यनुमातोऽपि हर गन्तुं विवाहरम् ।
गिरिं गत्वा हरः सार्द्धं सहितस्तान् विवाह-
वान् ।
यथायोग्यं समाभाष्य प्रमोदैकमतो मुनीन् ॥
कालीविवाहदिवसे त्वमायात मां प्रति ।
इति चापि हरेणोक्तं प्रतिश्रुत्य ययौ वसुः ॥
अथान्योन्यप्रियतया ज्ञात्वा ज्ञात्वा गतागतम् ।
समयं कारयामास विवाहाय हरो गिरिम् ॥
माधवे मासि पञ्चम्यां सितपक्षे गुरोर्दिने ।
चन्द्रे चोत्तरफल्गुन्यां भरण्यादौ स्थिते रवौ ॥
आगता मुनयस्तत्र मरीचिप्रमुखा मुदुः ।
हरेण निमन्त्रिताः सर्व्वे तथा ब्रह्मादयः सुराः ॥
तथा च सर्व्वे दिक्पाला मुनयो ये तपोधनाः ।
ग्रन्था यत्र तदा ग्रामो ब्रह्माण्याद्यास्तु मातरः ॥
नारदश्च सनकश्च देवर्षिश्च दक्षः सुतः ।
एतैः परिकरैः साहं गणैराप्यायितः स्वकैः ।
कन्याविवाहविधिना गिरिपुत्रीं हरोऽग्रहीत् ॥
विवाहे त्रिदिवा शम्भोः सर्व्वा येऽष्टौ तयो
स्थिताः ।
ते जाम्बूनदवर्णाढ्या अलङ्कारास्तदाभवन् ॥
त्रिशूलोऽभूच्छ्रावहेवो जटाः कैशत्वमागताः ।
शिरःस्थितश्चन्द्रश्च प्रोच्चिता ज्वलितोऽभवत् ।
ललाटनेत्रमभवत्तदा रत्नं महार्घकम् ।
विचित्रवसनं व्याघ्रशिरास्तोतदा द्विजाः ॥
विभूतिलेपोऽभूत्तस्य सुगन्धिमलयोद्भवः ।
चारुरूपो हरश्चैव बभूवाद्भुतदर्शनः ॥
ततो देवाः समन्मर्माः सिद्धा विद्याधरोरगाः ।
विस्मयं परमं प्रापुर्हरं दृष्ट्वा तथाविधम् ।
हिमवान् सहितश्चाभून् बहुपुत्रैश्च मेनया ।
ज्ञातयश्चास्य ससुहृद्धरं दृष्ट्वा तथाविधम् ॥
एवं मत्वा तत्र जगौ हरं दृष्ट्वा मनोहरम् ॥
सर्व्वं शिवकरं यस्मात्स्मादस्याभवत् सुराः ।
तस्मात् शिवोऽयं लोकेषु नामतस्तोऽधिकः
शिवः ॥
महेश्वरस्यमायुक्तमीदृशं यः स्मरेद्धदा ।
सततं तस्य कल्याणं वाञ्छितञ्च भविष्यति ॥
एवं काली महामाया योगनिद्रा जगत्प्रसूः ।
पूर्व्वं दाक्षायणी भूत्वा पश्चात् गिरिसुताभवत् ॥
स्वयं समर्थापि सती काली सम्मोहितुं हरम् ।
तथाप्युग्रं तपस्तेपे हिताय जगतां शिवा ।
इदं सम्भोगकाराय कालिका चन्द्रशेखरम् ॥
एतत्तु वर्णितं सर्व्वं कथितं शङ्करी यथा ।



हिमवत्तनया भूत्वा पुनः प्राप महेश्वरम् ॥"

इति कालिकापुराणे ४६ अध्यायः ॥ ० ॥

अथ गणा यथा,—

पुलस्त्य उवाच ।

"हरोऽपि मन्दरे याते समाभूयाद्य मन्दिरम् ।
प्राहामन्त्र्य ह्येजाहे ये स्थिताश्च धरातले ॥
ततो महेश्वरवचनान्नन्दी कर्म्मसमाधिपः ।
उपस्पृश्य जलं धीमान् जजाप गणपालकान् ॥
नन्दिना संस्मृताः सर्व्वे गणनाथाः सहस्रशः ।
समुत्पेतुः त्वरायुक्ताः प्रणतास्त्रिदशेश्वरम् ॥
आगतांश्च गणान्नन्दी कृताञ्जलिपुटोऽव्ययः ।
सर्व्वान् निवेदयामास शङ्कराय महात्मने ॥

नन्द्युवाच ।

यानेतान् पश्यसि शम्भो त्रिनेत्रान् जटिलान्
शुचीन् ।
एते रुद्रा इति ख्याताः कोट्य एकादशैव च ॥
वानराख्यान् पश्यसि यान् शार्दूलसमविक्र-
मान् ।
एते वै द्वारपालास्ते मन्नामानो यशोधनाः ॥
षण्मुखान् पश्यसि यांश्च शक्तिपाणीन् शिखि-
ध्वजान् ।
षट् च षष्टिस्तथा कोट्यः स्कन्दनाम्नः कुमार-
कान् ॥
एतावत्यस्तथा कोट्यः शाखा नाम षडाननाः ।
विशाखास्तावदेवोक्ता नैगमेयाश्च शङ्कर ! ॥
सप्तकोटिशताः शम्भो अमी वै प्रमथोत्तमाः ।
एकैकं प्रति देवेश तावत्यो ह्यपि मातरः ॥
भस्माङ्गितदेहाश्च त्रिनेत्राः शूलपाणयः ।
एते शैवा इति प्रोक्तास्तव भक्ता गणेश्वराः ॥
तथा पाशुपताश्चान्ये भस्मप्रहरणा विभो ।
एते गणास्त्वसंख्याताः साहाय्यार्थं समागताः ॥
पिनाकधारिणो रौद्रा गणाः कालमुखाः परे ।
तव भक्ताः समाख्याता जटामण्डलिनोऽद्भुताः ॥
खट्वाङ्गयोधिनो वीरा रक्तचर्म्मसमावृताः ।
इमे प्राप्ता गणा योद्धुं महाव्रतिन उत्तमाः ॥
दिग्वाससो मौनिनश्च घण्टाप्रहरणास्तथा ।
निरामया नाम गणाः समाख्याता जगद्गुरो ॥
सार्द्धद्विनेत्राः पद्माक्षाः श्रीवत्साङ्कितवक्षसः ।
समाख्याताः खगारूढा वृषभध्वजिनोऽव्ययाः ॥
महापाशुपता नाम चक्रशूलधरास्तथा ।
भैरवो विष्णुना सार्द्धमभेदेनार्च्चितो हि यैः ॥
इमे मृगेन्द्रवदनाः शूलवाणधनुर्धराः ।
गणास्त्वद्रोमसम्भूता वीरभद्रपुरोगमाः ॥
एते चान्ये च बहवः शतशोऽथ सहस्रशः ।
साहाय्यार्थं तवायाता यथाप्रीत्यादिशस्व तान् ।
ततोऽभ्येत्य गणाः सर्व्वे प्रणेमुर्वृषकेतनम् ॥"

इति वामनपुराणे ६४ अध्यायः ॥

अथ लिङ्गपूजादि शिवलिङ्गशब्दे द्रष्टव्यम् ॥

अथास्य जीवविचारदेवीकृतस्तवसंक्षेपविषयो यथा,—

श्रीदेव्युवाच ।

"देवेश परमेशान सर्व्वज्ञ सर्व्वपूजित ।
त्वं वक्ष्यसि गुह्यमेतत् कृपया मम शङ्कर ॥

ज्ञाय विद्याय ज्ञात्माय वैराग्यपराय च ।
वेदज्ञामविदं देवं च वक्ष्मतिने क्वचित् ।
कुम्भे मोचिते दद्यादाचार्य्ये तत्सर्वंविधि ।
सम्यग्ज्ञाय सौम्याय सदाकल्याणकारिणे ।
तपोनिधाय संपूज्य माल्याम्बरविभूषणैः ।
दूरे सति गुरोर्देयं तदभावे द्विजातये ।
न वित्तशाठ्यं कुर्व्वीत कुर्व्वन् मोहात् पतत्यधः ।
अनेन विधिना यस्तु कुर्य्यात् शिवचतुर्द्दशीम् ।
सोऽश्वमेधसहस्रस्य फलमाप्नोति मानवः ।
ब्रह्महत्यादिकं किञ्चिद्यद्यदस्ति च वा कृतम् ।
पितृभिर्बान्धवैर्वापि तत् सर्व्वं नाशमाप्नुयात् ।

> दीर्घायुरारोग्यकुलाभिवृद्धि-
> रत्राक्षयास्तु चतुर्भुजत्वम् ।
> गणाधिपत्यं दिवि कल्पकोटि-
> शतं वसित्वा पदमेति शम्भोः ।
>
> न इन्द्रवाचिरञ्चिकमलासनाद्याः
> चक्रमिन्द्रो न पितामहोऽपि वक्तुम् ।
> न च विहङ्गमोऽप्ययं न चाहं
> यदि जिह्वायुतकोटयोऽपि वक्त्रे ।

भवनममरवल्लभः पठति यः शृणोति यदा
शृणोति च विमत्सरः सकलपापविध्वंसिनीम् ।
इमां शिवचतुर्द्दशीममरकामिनीकोटयः
स्तुवन्ति तमनिन्दितं किल समाचरेद्यः सदा ॥

> या चाथ नारी कुरुते च भक्त्या
> भर्त्तारमापृच्छ्य सुतं गुरुं वा ।
> सापि प्रसादात् परमेश्वरस्य
> परं पदं याति पिनाकपाणेः ॥"

इति मात्स्ये शिवचतुर्द्दशीव्रतं ८० अध्यायः ॥*॥ फाल्गुनी कृष्णा चतुर्द्दशी । तत्र शिवव्रतं कर्त्तव्यम् । तस्य विवरणं शिवरात्रिशब्दे द्रष्टव्यम् ।

**शिवज्ञा**, स्त्री, ( शिवं जानातीति । ज्ञा + कः ।) शिवोपासिका । मङ्गलज्ञात्री । शिवं जानाति वा इत्यर्थे कप्रत्ययः ।

**शिवज्ञानं**, क्ली, (शिवस्य ज्ञानमस्मात् ।) शुभाशुभकालबोधकशास्त्रम् । यदा यात्रादिक्रिया अवश्यकर्त्तव्या भवति; शास्त्रोक्तशुभसमयप्राप्तिश्च न भवति तदा शिवज्ञानोक्तशुभसमये कर्म्म कर्त्तुमुचितं भवति । एतच्छिवज्ञानोक्तमाहेन्द्रयोगे कृतयात्रादिकर्म्म अमृतयोगे कार्य्यसिद्धिं वज्रे कार्य्यनाशं शून्ये वस्तु अपमानं वा प्राप्नोति । दिवारात्रौ माघ-फाल्गुन-चैत्र-वैशाखश्रावणभाद्रेषु एते योगा एकरूपाः आश्विनकार्त्तिकाग्रहायणपौषेषु एकप्रकाराः ज्यैष्ठाषाढयोश्च एकरूपा भवन्ति । यथा,—

माघ-फाल्गुन-चैत्र-वैशाख-श्रावण-भाद्रेषु
दिवादण्डा यथा ।

रविवारे मा २ अ ८ शू ८ मा २ व १० ।
सोमवारे अ ४ व ८ अ ६ व ६ मा ४ शू २ ।
मङ्गलवारे व ४ शू २ अ ६ व ४ शू २ अ ४ शू २ अ ४ शू २ ।
बुधवारे अ ४ व ६ अ ४ शू २ व ४ मा ४ अ ४ शू २ ।
गुरुवारे मा ४ शू २ व ६ मा ६ शू ४ व ४ शू ४ ।
शुक्रवारे अ २ व २ अ ६ व ६ अ ६ शू ४ अ ४ ।
शनिवारे शू ४ व ४ शू २ अ ८ शू ४ व ४ शू ४ ।

तेषु रात्रिदण्डा यथा ।

रविवारे शू २ मा २ अ ४ व ८ मा ८ शू ६ ।
सोमवारे व २ अ ६ व ६ अ ८ शू ८ ।
मङ्गलवारे अ २ व ४ शू २ अ ६ व ६ अ ४ व ४ शू २ ।
बुधवारे शू २ अ ६ मा ४ व ४ शू ४ अ १० ।
गुरुवारे व १४ शू ४ व ४ अ २ शू ६ ।
शुक्रवारे व ४ अ ४ शू ४ मा २ व ६ शू ४ अ २ मा २ शू २ ।
शनिवारे शू २ व ४ अ ६ व ४ अ ४ व २ अ ४ शू ४ ।

आश्विन-कार्त्तिकाग्रहायणपौषेषु
दिवादण्डा यथा ।

रविवारे शू २ अ ६ व ८ अ ८ शू २ मा २ शू २ ।
सोमवारे अ ४ शू ४ अ ६ व १६ ।
मङ्गलवारे अ २ व २ अ १० व ६ शू ६ व ४ ।
बुधवारे अ २ मा २ अ २ व ६ अ ६ शू २ मा ६ व ४ ।
गुरुवारे अ ४ व ४ शू ४ व ६ शू २ अ ४ व ६ ।
शुक्रवारे अ २ व २ अ ६ व ६ अ ८ शू २ अ ४ ।
शनिवारे अ २ व २ अ ६ व ६ अ ८ शू २ अ ४ ।

तेषु रात्रिदण्डा यथा ।

रविवारे शू २ व ४ अ ४ व ६ अ ४ शू २ अ ८ ।
सोमवारे व ६ अ ८ व ८ अ २ व ६ ।
मङ्गलवारे मा ६ अ २ शू २ अ ६ व ४ मा ४ शू २ अ ४ ।
बुधवारे व २ अ २ व ४ अ १६ व २ शू ४ ।
गुरुवारे शू २ अ ८ व ६ अ ८ शू २ अ ४ ।
शुक्रवारे व २ अ ८ व ६ अ ८ शू २ अ ४ ।
शनिवारे व १४ शू ४ व ४ अ २ शू ६ ।

ज्येष्ठाषाढ़योर्दिवादण्डा यथा।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | शू ४ | अ ६ | व ६ | अ ६ | व ४ | मा २ | शू २। | |
| सोमवारे | व ८ | अ ४ | शू ६ | व ८ | शू ४। | | | |
| मङ्गलवारे | अ ६ | शू ४ | अ ६ | व ६ | मा २ | अ २ | मा २ | शू २। |
| बुधवारे | शू २ | व ४ | अ ८ | व ६ | अ ८ | शू ४। | | |
| गुरुवारे | मा २ | शू २ | व ६ | मा ४ | शू ४ | व ६ | अ ६। | |
| शुक्रवारे | शू २ | मा २ | व ६ | मा २ | शू ४ | अ ६ | व ४ | शू ४। |
| शनिवारे | मा २ | शू २ | व ६ | मा ६ | शू ४ | व ४ | अ ६। | |

तत्र रात्रिदण्डा यथा।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | अ ४ | शू ४ | व ४ | अ ६ | व ८ | शू ४। | | |
| सोमवारे | व ८ | अ ८ | शू ४ | अ ४ | शू २ | मा २ | शू २। | |
| मङ्गलवारे | अ २ | व ४ | मा ४ | शू ४ | व २ | अ ६ | शू २ | व ६। |
| बुधवारे | अ १० | शू २ | व ४ | अ ४ | शू १०। | | | |
| गुरुवारे | शू २ | अ ६ | शू २ | व ४ | शू २ | अ ६ | शू ४ | अ ४। |
| शुक्रवारे | अ ६ | शू २ | व ४ | शू ६ | अ ६ | शू २ | अ ४। | |
| शनिवारे | शू २ | अ २ | व ८ | शू २ | अ ६ | शू ४ | अ ६। | |

मतान्तरे अस्य प्रमाणं यथा,—
"माहेन्द्रे विजयो नित्यं जायते कार्य्यशोभनम्।
यमे कार्य्यविलम्बः स्याच्छून्ये च मरणं ध्रुवम्॥
वैशाखादिश्रावणान्तं एकभावेन संवदेत्।
अन्तादि दिवारात्रौ चतुर्मासं यथाक्रमम्॥
याममानं दिवामाने ज्ञेयं सर्व्वत्र मासके।
तत्प्रमाणेन ज्ञातव्यं दण्डमानं विचक्षणैः।
रात्रिमानप्रमाणेन ज्ञेयो दण्डप्रमाणकः॥
न वारतिथिनक्षत्रं न योगकरणं तथा।
शिवज्ञानं समासाद्य सर्व्वं सुविविचारयेत्॥"
तथा।
"आश्वादिमार्गपर्य्यन्तं सप्तवारे समादिशेत्।
शून्यवक्रादियोगं हि पौषादिश्चैवतत्तथा॥"
इति ज्योतिषे शिवज्ञानम्॥*॥
अनेकप्रकारं शिवज्ञानं शिवाज्ञा शिवाजिह्वितं अन्तघटी च दृष्टं किन्तु परस्परमनैक्यं जातम्॥

शिवतातिः, स्त्री, कल्याणकारिणी। इति हेमचन्द्रः॥ अस्य पर्य्यायः शिवङ्करशब्दे द्रष्टव्यः॥

शिवदत्तं, क्ली, (शिवेन दत्तम्।) विष्णुचक्रम्। इति केचित्॥ शिवेन शिवाय वा दत्तं त्रय-माणञ्च॥

शिवदारु, क्ली, (शिवस्य दारु।) देवदारुवृक्षः। इति राजनिर्घण्टः॥

शिवदूतिका, स्त्री, (शिवदूती+स्वार्थे कन्।) मातृकाविशेषः। इति शब्दरत्नावली॥

शिवदूती, स्त्री, (शिवेन दूतयति सन्देशं प्रापयती-त्यर्थे दूत+णिच्+पचाद्यच्। यद्वा, शिवो दूतो यस्याः। गौरादेराकृतिगणत्वात् ङीष्।) दुर्गा। इति त्रिकाण्डशेषः॥ योगिनीविशेषः। यथा,
"ब्रह्माणी प्रथमा प्रोक्ता ततो माहेश्वरी परा।
कौमारी वैष्णवी चैव वाराही पञ्चमी तथा॥
नारसिंही तथैवैन्द्री शिवदूती तथाष्टमी।
एताः पूज्या महाभागा योगिनीः काम-दायिनीः॥"
तस्या उत्पत्तिमन्त्रध्यानादि यथा,—
"कौषिक्या हृदयाद्देवी निःसृता ध्यानतो हरेः।
शिवदूतीति विख्याता शिवाशतसुसंवृता॥
मन्त्रमस्याः प्रवक्ष्यामि धर्म्मकामार्थदायकम्।
यत् श्रुत्वा साधको याति दुर्लभं शिवमन्दिरम्॥
येनाराध्य महादेवीं शिवदूतीं शिवात्मिकाम्।
न चिराल्लभते कामान्नरः सर्व्वजयी भवेत्॥
अन्तःसमासिसहितो विन्दिन्दुभ्यां दशावरा।
स्वरेण षान्त्यदन्त्येन संस्थोऽन्तेन पूर्व्वशः॥
स एव विन्दुयुगलपूर्व्वस्योपान्त्यपावकः।
षष्ठस्वरकलाशून्यैः संहितः प्रथमस्थितः॥
मन्त्रोऽयं शिवदूत्यास्तु शिवदूतीजयप्रदः।
रूपमस्याः प्रवक्ष्यामि ध्यानं वत्सक संमतम्॥
चतुर्भुजं महाकायं सिन्दूरसदृशद्युतिम्।
रक्तदन्तं मुण्डमालाजटाजूटार्द्धचन्द्रधृक्॥
नागकुण्डलहाराभ्यां शोभितं नखरोज्ज्वलम्।
व्याघ्रचर्म्मपरीधानं दक्षिणे शूलचक्रधृक्॥
वामे पाशं तथा चर्म्म बिभ्रदूर्द्ध्वं परिक्रमात्।
स्थूलवक्त्रं पीनोष्ठं तुङ्गमूर्त्तिं भयङ्करम्॥
निक्षिप्य दक्षिणं पादं सन्तिष्ठेत् कुणपोपरि।
वामपादं शृगालस्य पृष्ठे चैवशतैर्वृतम्॥
ईदृशं शिवदूत्यास्तु मूर्त्तिं ध्यायेद्विभूतये।
ध्यानमात्रादथैतस्या नरः कल्याणमाप्नुयात्॥
पूजनाद्चिराद्देवी सर्व्वान् कामान् ददाति च।
यः शिवाविरुतं श्रुत्वा शिवदूतीं शिवप्रदाम्।
प्रणमेत् साधको भक्त्या तस्य कामाः करे स्थिताः॥
यदा चण्डा जगतां रक्तवीजं हिताय वै।
महादेवी महामाया तदास्याः कायतः सृता॥
दूतं प्रस्थापयामास शिवं शुम्भाय चाम्बिका।
तेन सा शिवदूतीति देवैः सर्व्वैः प्रगीयते॥
क्षेमङ्करी च शान्ता च वेदमाता महोदरी।
कराला कामदा देवी भगास्या भगमालिनी॥
भगोदरी भगाहारा भगजिह्वा भगा तथा।
एता द्वादश योगिन्यः पूजने परिकीर्त्तिताः॥
एता द्वादश योगिन्यः शिवदूत्याः सदैव हि।
विचरन्ति स्वयं देवी यत्र यत्रैव गच्छति॥"
इति कालिकापुराणे उत्तरतन्त्रे ५० अध्यायः॥
प्रमाणानन्तरं वामने ५३ अध्याये मार्कण्डेय-पुराणे देवीमाहात्म्ये रक्तवीजवधाख्याने च द्रष्टव्यम्॥

शिवद्रुमः, पुं, (शिवप्रियो द्रुमः।) बिल्ववृक्षः। इति राजनिर्घण्टः॥

शिवद्विष्टा, स्त्री, (शिवेन द्विष्टा तत्पूजनानर्हत्वात्।) केतकी। इति राजनिर्घण्टः॥

शिवधातुः, पुं, (शिवस्य धातुः।) पारदम्। पारदं शिववीर्य्यं स्यादिति दर्शनात्। गोरक्ष-मणिः। इति केचित्॥

शिवनाभिः, पुं, (शिवस्य नाभिरिव।) शिवलिङ्ग-विशेषः। यथा,—
"उत्तमं मध्यमधमं त्रिविधं लिङ्गमीरितम्।
चतुरङ्गुलसमुत्सेधे रम्यवेदिकमुत्तमम्।
उत्तमं लिङ्गमाख्यातं मुनिभिः शास्त्रकोविदैः।
तदर्द्धं मध्यमं प्रोक्तं तदर्द्धमधमं स्मृतम्।
शिवनाभिमयं लिङ्गं प्रतिपूज्य महर्षिभिः।
श्रेष्ठञ्च सर्व्वलिङ्गेभ्यस्तस्मात् पूज्यं विधानतः।"
इति वीरमित्रोदयः॥

शिवपुरी, स्त्री, (शिवस्य पुरी।) काशी। इति हेमचन्द्रः॥

शिवप्रियं, क्ली, (शिवस्य प्रियम्।) स्फा-टिकम्। इति राजनिर्घण्टः॥ शिवस्य शिवङ्करे, च॥

शिवप्रियः, पुं, (शिवस्य प्रियः।) बकवृक्षः। इति जटाधरः॥ स्फाटिकः। धुस्तूरः। इति राज-निर्घण्टः॥

शिवप्रिया, स्त्री, (शिवस्य प्रिया।) दुर्गा। इति शब्दमाला॥

शिवमल्लकः, पुं, अर्जुनवृक्षः। इति राजनिर्घण्टः॥

शिवमल्लिका, स्त्री, ( शिवप्रिया मल्लिका। ) वकवृक्षः। इति राजनिर्घण्टः॥

शिवमल्ली, स्त्री, ( शिवप्रिया मल्ली। ) वकवृक्षः। इत्यमरः॥

शिवरसः, पुं, भाण्डात् पर्य्युषितरसः। तत्पर्य्यायः। काञ्जिकम् २। अस्य गुणाः। दीपनत्वम्। मधुरत्वम्। अम्लत्वम्। अन्तर्दाहहरत्वम्। लघुतर्पकत्वञ्च। इति राजनिर्घण्टः॥

शिवरात्रिः, स्त्री, ( शिवप्रिया रात्रिः। ) शिवचतुर्द्दशी। यथा, कालमाधवीये स्कान्दे नागरखण्डम्।

"माघमासस्य शेषे या प्रथमे फाल्गुनस्य च।
कृष्णा चतुर्द्दशी सा तु शिवरात्रिः प्रकीर्त्तिता॥"

अमावास्यान्तमासाभिप्रायेण माघीयत्वं फाल्गुनीयत्वे मुख्यचान्द्रमासाभिप्रायेण अविरुद्धे। ततस्तु माघ्यनन्तरा चतुर्द्दशी शिवरात्रिः तस्यामुपवासः प्रधानम्।

"न स्नानेन न वस्त्रेण न धूपेन न चार्च्चया।
तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासतः॥",

इति शङ्करोक्तेः॥ *॥

स्कान्दे।

"ततो रात्रौ प्रकर्त्तव्यं शिवप्रीणनतत्परैः।
प्रहरे प्रहरे स्नानं पूजाञ्चैव विशेषतः॥"

अत्र वीप्सया प्रहरचतुष्टयसाध्यं व्रतं प्रतीयते। वराहसंहितायां भविष्योत्तरसंहितायाम्।

"शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः।
सर्व्वं पूजाफलं हन्ति शिवरात्रिबहिर्म्मुखः॥" *

संवत्सरप्रदीपे।

"दुग्धेन प्रथमं स्नानं दध्ना चैव द्वितीयके।
तृतीये च तथाज्येन चतुर्थे मधुना तथा॥"

ईशानसंहितायाम्।

"माघे कृष्णचतुर्द्दश्यां रविवारो यदा भवेत्।
भौमो वापि भवेद्देवि कर्त्तव्यं व्रतमुत्तमम्॥
शिवयोगस्य योगेन तद्भवेदुत्तमोत्तमम्।
शिवरात्रिव्रतं नाम सर्व्वपापप्रणाशनम्।
आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम्॥"

नागरखण्डे।

"उपवासप्रभावेण बलादपि च जागरात्।
शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया।
अक्षयान् लभते लोकान् शिवसायुज्यमाप्नुयात्॥"

माघे।

"वर्षे वर्षे महादेवि नरो नारी पतिव्रता।
शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत्॥"

शिवसंहितायाम्।

"एवमेव व्रतं कुर्य्यात् प्रति संवत्सरं व्रती।
द्वादशाब्दिकमेतद्धि चतुर्व्विंशाब्दिकं तथा।
सर्व्वान् कामानवाप्नोति प्रेत्य चेह च मानवः॥"

माधवादिधृता स्मृतिः।

"प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्द्दशी॥"

प्रदोषमाह वत्सः।

"प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते॥"

अर्द्धमनकालम्। वायुपुराणे।

"त्रयोदश्यस्तगे सूर्य्ये चतसृष्वपि नाडिषु।
भूतविद्धा तु या तत्र शिवरात्रिव्रतञ्चरेत्॥"

ईशानसंहितायाम्।

"माघे कृष्णचतुर्द्दश्यामादिदेवो महानिशि।
शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः।
अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्द्दशी॥
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्याद्व्रतं नरः॥"

अत्र।

"महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः॥"

इति देवलोक्ता महानिशा ग्राह्या। घटिका दण्डः। एवञ्च यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्द्दशी तद्दिने व्रतं उभयव्याप्त्यनुरोधात्। कालमाधवीयेऽप्येवम्। एतेन परदिने उभयव्याप्तित्वेऽपि पूर्व्वदिवसीयरात्रिद्वितीययामप्रभृतिचतुर्द्दशीसत्त्वे बहुप्रहरव्यापित्वेन पूर्व्वदिन एव व्रतमिति निरस्तम्। यदा तु पूर्व्वेद्युर्निशीथमात्रव्याप्तिः परेद्युः प्रदोषमात्रव्याप्तिस्तदा पूर्व्वेद्युर्व्रतम्। प्रधानकालव्याप्त्यनुरोधात्।

"पूर्व्वेद्युरपरेद्युर्व्वा महानिशि चतुर्द्दशी।
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्याद्व्रतं नरः॥"

इतीशानसंहितावचनाच्च॥

एतद्विषय एव भविष्यपुराणम्।

"अर्द्धरात्रात् पुरस्तात्तु जयायोगो भवेद्यदि।
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः॥"

विष्णुधर्म्मोत्तरे।

"जयन्ती शिवरात्रिश्च कार्य्ये भद्रजयान्विते।
कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च पारणम्॥"

तिथ्यन्ते पारणं जयन्तीमात्रपरं अत्र चतुर्द्दश्यामेव तत्।

"ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै।
पूजितानि भवन्तीह भूतायां पारणे कृते॥"

इति स्कान्दात्॥

"दिनमानप्रमाणेन या तु रात्रौ चतुर्द्दशी।
शिवरात्रिस्तु सा ज्ञेया चतुर्द्दश्यान्तु पारणम्॥"

इति गौतमीयाच्च॥

यदा तु पूर्व्वदिने न निशीथव्याप्तिः परदिने प्रदोषमात्रव्यापिनी तदा परा ग्राह्या। प्रदोषव्यापिनीति प्रागुक्तत्वात् तिथेश्चिरसन्ध्याव्यापित्वाच्च। एतद्विषय एव लिङ्गपुराणम्।

"शिवरात्रिव्रते भूतां कामविद्धां विवर्ज्जयेत्।
एकेनैवोपवासेन ब्रह्महत्यां व्यपोहति॥"

अत्रामावास्यायामेव पारणम्।

"शिवा घोरा तथा प्रेता सावित्री च चतुर्द्दशी।
कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम्॥"

इति वचनात्॥ *॥

तदयं संक्षेपः। यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्द्दशी तद्दिने व्रतम्। यदा तु पूर्व्वेद्युर्निशीथव्यापिनी परेद्युः प्रदोषमात्रव्यापिनी तदा पूर्व्वेद्युर्व्रतम्। यदा तु न पूर्व्वेद्युर्निशीथव्याप्तिः परेद्युः प्रदोषव्यापिनी तदा परदिने। पारणन्तु परदिने चतुर्द्दशीलाभे चतुर्द्दश्यां तदलाभे अमावस्यायाम्। तत्र प्रयोगः॥ *॥

प्रातःकृतस्नानः सन् सविता सूर्य्यः सोम इति पठित्वा जलाञ्जल्याद्याय सङ्कल्पयेत्।

"मन्त्रेणानेन गृह्णीयान्नियमं भक्तिमान्नरः।
शिवरात्रिव्रतं ह्येतत् करिष्येऽहं महाफलम्।
निर्व्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते॥"

इति शिवरहस्यात् शिवरात्रौ इत्यादिना नियम्य।

"चतुर्द्दश्यां निराहारो भूत्वा शम्भो परेऽहनि।
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर॥"

इति गरुडपुराणीयं पठेत्।

रात्रौ प्रथमप्रहरे प्रतिष्ठिते लिङ्गे अप्रतिष्ठिते वा प्रतिष्ठां विधाय पूजां कुर्य्यात्। ह्रौँ अस्त्राय फडिति पादघातत्रयेण विघ्नान्निःसार्य्य तेनैव तालत्रयेण करस्फोटिकया च दशदिग्बन्धनं कृत्वा भूतशुद्धिं विधाय ह्रौ हृदयाय नम इत्यादिना षडङ्गानि न्यस्य ह्रौँ इति मन्त्रेण प्राणायामं विधाय पूजयेत्। पार्थिवलिङ्गे चेत्तदा वक्ष्यमाणपूजाविधिना पूजयेत्। तत्रायं विशेषः। ह्रौँ ईशानाय नम इति प्रथमप्रहरे दुग्धेन स्नापयित्वा पुनर्जलेन स्नापयित्वा।

"शिवरात्रिव्रतं देव पूजाजपपरायणः।
करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर॥"

इत्यनेनार्घ्यं दत्त्वा गन्धादिभिः संपूज्य मूलमन्त्रं जपित्वा प्रणम्य गीतनृत्यादिभिस्तं प्रहरं नयेत्। तद्वाणं तज्जपः स्नानं तत्कथाश्रवणादिकम्।

उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः॥"

इति देवीपुराणे सामान्यतः श्रवणात् अत्रापि तथा॥ *॥ द्वितीयप्रहरे तु विशेषः। ह्रौँ अघोराय नम इति दध्ना स्नानम्। अर्घ्यमन्त्रस्तु।

"नमः शिवाय शान्ताय सर्व्वपापहराय च।
शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह॥" *॥

तृतीयप्रहरे तु। ह्रौँ वामदेवाय नम इति घृतेन स्नानम्। अर्घ्यमन्त्रस्तु।

"दुःखदारिद्र्यशोकेन दग्धोऽहं पार्व्वतीश्वर।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे॥" *॥

चतुर्थप्रहरे तु। ह्रौँ सद्योजाताय नम इति मधुना स्नानम्। अर्घ्यमन्त्रस्तु।

"मया कृतान्यनेकानि पापानि हर शङ्कर।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे॥"

ततो नमः शिवाय इति मूलमन्त्रं जपित्वा प्रभातेऽविघ्नेन इत्यादिवक्ष्यमाणमन्त्रान् पठेत्। तथा च गरुडपुराणम्।

"मूलमन्त्रं ततो जप्त्वा प्रभाते तत् समापयेत्।
अविघ्नेन व्रतं देव त्वत्प्रसादात् समर्पितम्।
क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर।
यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम्॥"

अथोवाच हरिर्ब्रह्मन् शार्व्वं लिङ्गं महर्षिभिः।
पातितन्तस्य भारार्त्ता चचाल वसुन्धरा ॥
ततस्तदद्भुततमं श्रुत्वा देवः पितामहः।
तत्र गच्छामि देवेश इत्यमाह पुनः पुनः ॥
ततः पितामहो देवः केशवश्च जगत्पतिः।
आजग्माम तदुद्देशं यत्र लिङ्गं भवस्य तत् ॥
ततोऽनन्तं हरिर्लिङ्गं दृष्ट्वारुह्य खगेश्वरम्।
पातालं प्रविवेशाथ विस्मयाविष्टितो विभुः ॥
ब्रह्मा पद्मविमानेन ऊर्द्धमाक्रम्य सर्व्वगः।
नैवान्तमलभद्ब्रह्मा विस्मितः पुनरागतः ॥
विष्णुर्गत्वाथ पातालं सप्तलोकपरायणः।
चक्रपाणिर्विनिष्क्रान्तो लेभेऽन्तं न महामुने ॥
विष्णुं पितामहश्चाह हरिर्ब्रह्माणमाह च।
नमोऽस्तु ते शूलपाणे नमोऽस्तु वृषभध्वज।
जीमूतवाहन कवे शर्व्व त्र्यम्बक शङ्कर ॥
महेश्वर महेशान सुवर्णाक्ष वृषाकपे।
दक्षयज्ञक्षयकर काल रुद्र नमोऽस्तु ते ॥
त्वमादिरस्य जगतस्त्वं मध्यं परमेश्वर।
भवानन्तश्च भगवान् सर्व्वगस्त्वं नमोऽस्तु ते ॥

पुलस्त्य उवाच।

एवं संस्तूयमानस्तु तस्मिन् दारुवने हरः।
स्वरूपी ताविदं वाक्यमुवाच वदतां वरः ॥

हर उवाच।

किमर्थं देवतानाथौ परिभूतक्रमन्त्विह।
मां स्तुवाते भृशास्वस्थं कामतापितविग्रहम् ॥

देवावूचतुः।

भवतः पातितं लिङ्गं यदेतद्भुवि शङ्कर।
एतत् प्रगृह्यतां भूयस्ततो देव वदावहे ॥

हर उवाच।

यद्यर्च्चयन्ति त्रिदशा मम लिङ्गं सुरोत्तमौ।
तदेतत् प्रतिगृह्णीयात् नान्यथेति कथञ्चन ॥
ततः प्रोवाच भगवानेवमस्त्विति केशवः ॥
ब्रह्मा स्वयञ्च जग्राह लिङ्गं कनकपिङ्गलम्।
ततश्चकार भगवांश्चातुर्व्वर्ण्यं हरार्च्चने ॥
शास्त्राणि चैषां मुख्यानि नानोक्तिविदि-
तानि च।
आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने ॥
तृतीयं कालवदनं चतुर्थञ्च कपालिनम्।
शैव आसीत् स्वयं शक्तिर्व्वशिष्ठस्य प्रियः सुतः ॥
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः।
महापाशुपतश्चासीद्भारद्वाजस्तपोधनः ॥
तस्य शिष्योऽप्यभूद्राजा ऋषभः सोमकेश्वरः।
कालास्यो भगवानासीदापस्तम्बस्तपोधनः ॥
तस्य शिष्यो वरो वैश्यो नाम्ना क्राथेश्वरो
मुने।
महाव्रती च धनदस्तस्य शिष्यश्च वीर्य्यवान् ॥
कुर्णोदर इति ख्यातो जात्या शूद्रो महातपाः।
एवं स भगवान् ब्रह्मा पूजनाय शिवस्य च ॥
कृत्वा तु चातुराश्रम्यं स्वमेव भवनं गतः।
गते ब्रह्मणि शर्व्वोऽपि तपः संहृत्य तं तदा।
लिङ्गं चित्रवने सूक्ष्मं प्रतिष्ठाप्य चचार ह ॥"

इति वामनपुराणे ६ अध्यायः ॥ ७ ॥

अपि च।

"ततः कदाचिन्निवसतो ब्रह्मणो मोहितस्य च।
वालिखिल्याः समुत्पन्नास्तपस्तप्तुं समारभन् ॥
दिव्यं वर्षसहस्रं वै तेपुस्ते दुष्करं तपः।
ततः कालेन महता पार्व्वती च पतिव्रता ॥
तेषां तपः समालोक्य याति देवी सुदुःखिता।
प्रसाद्य देवदेवेशं शङ्करं प्राह सुव्रता ॥
क्लिश्यन्ति वालिखिल्याश्च प्रसादार्थं तव प्रभो।
एतेभ्योऽपि प्रियं देव विधिवत् कुरु सेवया ॥
तच्छ्रुत्वा वचनं देव्याः पिनाकी परचिन्तकः।
प्रोवाच कान्ते कान्तञ्च वचनं प्रियया सह ॥
न वेत्सि देवि तत्त्वेन धर्म्मस्य गहना गतिः।
नैते धर्म्मं विजानन्ति यथार्थं धर्म्मचारिणः ॥
न दास्यामि वरं तेभ्यो यस्मात्ते मूढबुद्धयः।
एतत् श्रुत्वाब्रवीत् देवी मा मैवं शंसितव्रताः ॥
ततो रुद्र उवाचेदं देवीं देवः स्मिताननः।
तिष्ठ त्वमत्र यास्यामि यत्रैते मुनिसत्तमाः ॥
इत्युक्ता तु ततो देवी शङ्करेण महात्मना।
गच्छस्वेत्याह मुदिता भर्त्तारं भुवनेश्वरी ॥
यत्र ते मुनयः सर्व्वे काष्ठलोष्ठसमाश्रिताः।
तान् विलोक्य ततो देवो नग्नः सर्व्वाङ्गसुन्दरः ॥
वनमालाकृतापीडो युवा भिक्षाकपालभृत्।
आश्रमे पर्य्यटन् भिक्षां मुनीनां नियतात्मनाम् ॥
देहि भिक्षां ततश्चोक्त्वा स ह्याश्रमाश्रमं ययौ।
तं विलोक्याश्रमगतं योषितो ब्रह्मवादिनाम् ॥
सकौतुकस्वभावेन तस्य रूपेण मोहिताः।
प्रोचुः परस्परं कार्य्यमस्ति पश्याम भिक्षुकम् ॥
परस्परमितीचोक्त्वा गृह्य मूलफलं बहु।
गृहाण भिक्षामूचुस्तास्तं देवं मुनियोषितः ॥
तस्मै दत्त्वैव तां भिक्षां पप्रच्छुस्ताः स्मरातुराः ॥

नार्य्य ऊचुः।

कोऽसौ नाम व्रतविधिस्त्वया तापस सेव्यते।
यत्र नग्नेन लिङ्गेन वनमालाविभूषितः ॥
भवान् वै तापसो हृद्यो हृद्याः स्मो यदि
मन्यसे।
इत्युक्तस्तापसस्ताभिः प्रोवाच हसिताननः ॥
इदं मम व्रतं किञ्चिन्न रहस्यं प्रकाश्यते।
शृण्वन्ति बहवो यत्र तत्र तन्न विद्यते ॥
तस्य व्रतस्य सुभगा इति मत्वा गमिष्यथ।
एवमुक्तास्तदा तेन ताः प्रत्यूचुस्तदा मुनिम् ॥
ततोऽभ्येत्य गमिष्यामो मुने नः कौतुकं महत्।
इत्युक्त्वा तास्तदातीव जगृहुः पाणिपल्लवैः ॥
काचिच्चकर्ष बाहुभ्यां काचित् कामपरा तथा।
जानुभ्यामपरा नार्य्यो कचेषु ललनापरा ॥
अपरा तु कटीबन्धे चापरा पादयोरपि।
क्षोभं विलोक्य मुनय आश्रमेषु स्वयोषिताम् ॥
हन्यतामिति संभाष्य काष्ठपाषाणपाणयः।
पातयन्ति च देवस्य लिङ्गमुद्धृत्य भीषणम् ॥
पातिते तु ततो लिङ्गे गतोऽन्तर्हितमीश्वरः ॥
देवा च भगवान् रुद्रः कैलासं समुपाश्रितः।
पतिते देवदेवस्य लिङ्गे नष्टे चराचरे।
क्षोभो बभूव सुमहान् ऋषीणां भावितात्मनाम् ।

[illegible] 
[illegible] 

एवमुक्ता सर्व्व एव ऋषयो [illegible] ॥
ब्रह्मणः सदनं जग्मुर्देवैः सह [illegible] ॥

ऋषय ऊचुः।

अस्माकाञ्च कृतं ब्रह्मन् [illegible]
तस्योपशमने यत्नं कुरु सर्व्वोपकारक।

ब्रह्मोवाच।

गच्छामः शरणं देवं शूलपाणिं त्रिलोचनम्।
प्रसादाद्देवदेवस्य भविष्यथ यथा पुरा।
इत्युक्त्वा ब्रह्मणा सार्द्धं कैलासं गिरिसत्तमम्।
ददृशुस्ते समासीनमुमया सहितं हरम्।
ततः स्तोतुं समारब्धो ब्रह्मा लोकपितामहः।
अनन्ताय नमस्तुभ्यं वरदाय पिनाकिने।
एवं स्तुतो महादेवो ब्रह्मणा ऋषिभिस्तथा।
उवाच मा मा व्रजतु लिङ्गं भोः पुरतः पुनः।
क्रियतां मद्वचः शीघ्रं येन मे प्रीतिरुत्तमा।
भविष्यति प्रतिष्ठा या लिङ्गस्यात्र न संशयः।
ये लिङ्गं पूजयिष्यन्ति मम भक्तिसमाश्रिताः।
न तेषां दुर्लभं किञ्चित् भविष्यति हितं
मम।"

इति वामने ४२ अध्यायः ॥

कुरुक्षेत्रस्थितानि लिङ्गानि यथा,—

सनत्कुमार उवाच।

"वटस्य दक्षिणे भागे चक्रतीर्थं प्रकीर्त्तितम्।
स्थाणोर्व्वटस्य पूर्व्वेण मम तीर्थं प्रकीर्त्तितम्।
स्थाणोर्व्वटस्योत्तरतस्तीर्थं नागेश्वरं मतम्।
स्थाणोर्व्वटस्य पश्चिमतः स्कन्दतीर्थं प्रकीर्त्तितम्।
इमानि पुण्यतीर्थानि मध्ये रुद्रवटः स्थितः।
महादेवं समभ्यर्च्य प्राप्नोति परमं पदम्।
वटस्य चोत्तरे पार्श्वे तक्षकेण महात्मना।
प्रतिष्ठितं महालिङ्गं सर्व्वकामप्रदायकम्।
वटस्य पूर्व्वदिग्भागे विश्वकर्म्मकृतं महत्।
लिङ्गं प्रत्यङ्मुखं दृष्ट्वा सिद्धिमाप्नोति मानवः।
तत्रैव लिङ्गरूपेण संस्थिता वा सरस्वती।
तां प्रणम्य प्रयत्नेन बुद्धिं मेधाञ्च विन्दति।
वटपार्श्वस्थितं लिङ्गं ब्रह्मणा तत् प्रतिष्ठितम्।
दृष्ट्वा वटेश्वरं देवं प्रयाति परमं पदम्।
ततः स्थाणुवटं दृष्ट्वा कृत्वा चापि प्रदक्षिणम्।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा।
स्थाणोः पश्चिमदिग्भागे नकुलीशो गणः
स्थितः।

तमभ्यर्च्य प्रयत्नेन सर्व्वपापैः प्रमुच्यते।
तस्य दक्षिणदिग्भागे तीर्थं रत्नाकरं [illegible]।
तस्मिन् स्नातः सर्व्वतीर्थस्नातो भवति मानवः।
तस्य चोत्तरदिग्भागे रावणेन महात्मना
प्रतिष्ठितं महालिङ्गं गोकर्णं नाम नामतः।
आषाढमासे या कृष्णा भविष्यति चतुर्द्दशी
तस्यां पश्यति गोकर्णं तस्य पुण्यफलं [illegible]।
कामतोऽकामतो वापि यत् [illegible]
[illegible]।

स सर्व्वपातकाभोगी अन्ते कुम्भीरतां व्रजेत् ॥"

इति च तत्रैव ८ पटलः ॥*॥

अथ निर्माल्यभोजनदोषकारणं यथा,—

देव्युवाच ।

"दुर्लभं तव निर्माल्यं ब्रह्मादीनां कृपानिधे ।
तत्कथं परमेशान निर्माल्यं तव दूषितम् ॥

ईश्वर उवाच ।

मध्यस्थानस्थितं यत्तु तन्मुखं परमेश्वरि ।
श्यामलं तत्तु ईशानं सदा ऊर्द्ध्वं शुचिस्मिते ॥
कालाग्निरूपिणं तत्तु सर्व्वशक्तिमयं सदा ।
तेजोमयं महेशानि सुखमूर्द्ध्वं वरानने ॥
क्षीरोदमथने देवि उत्थितं गरलं महत् ।
ततः करतलीकृत्य तद्विषं परमेश्वरि ॥
निपीतं तद्विषं रम्यं तीक्ष्णं ब्रह्माण्डनाशनम् ।
तद्विषं कण्ठदेशे तु स्थितं हि सर्व्वदा मम ॥
ततः प्रभृति देवेशि मुखं ज्वालायते सदा ।
पत्रं वा यदि वा पुष्पं फलं वा वरवर्णिनि ॥
अन्यं हि परमेशानि उपचारं मनोहरम् ।
यो दद्यात् परमेशानि मन्मुखोपरि पार्व्वति ॥
अग्राह्यं तत्तु निर्म्माल्यं साक्षाद्ब्रह्ममयं यतः ॥
एतत्तु परमेशानि निर्म्माल्यं यस्तु धारयेत् ।
स भ्रष्टो जायते देवि निष्कृतिर्नास्ति तस्य वै ।
अग्राह्यं मम निर्म्माल्यं अतएव वरानने ॥
यद्दत्तं सन्मुखे देवि पुष्पं वा फलमुत्तमम् ।
तन्निर्म्माल्यं महेशानि गृह्णीयात् शिरसा सदा ॥
प्रथमं विष्णवे दत्त्वा विष्णुमन्त्रेण पार्व्वति ।
निर्माल्यं मम देवेशि विष्णोर्ग्राह्यं वरानने ॥
देवासुरमनुष्याश्च गन्धर्व्वा किन्नरादयः ।
ते सर्व्वे परमेशानि वराकाः क्षुद्रबुद्धयः ।
निर्माल्येषु च देवेशि अधिकारी कथं भवेत् ॥"

इति च तत्रैव १३।१४ पटलौ ॥*॥

"चतुर्द्दश्यां महेशानि शुक्लायां वरवर्णिनि ।
कृष्णायां वा महेशानि अमावास्यां विशेषतः ॥
निर्माय च चतुर्द्दश्यां लिङ्गं भक्त्या च पूजयेत् ।
एकहस्ते महेशानि निर्माय पार्थिवं शिवम् ॥
दक्षिणे वामहस्ते वा निर्माय ये च पार्थिवम् ।
तत्फलं परमेशानि लक्षलिङ्गसमं भवेत् ॥"

इति लिङ्गार्च्चनतन्त्रम् ॥ * ॥

बाणलिङ्गलक्षणादिकं बाणलिङ्गशब्दे द्रष्टव्यम् ॥* अथ रौद्रलिङ्गलक्षणम् । वीरमित्रोदयधृतम् ।

"नदीप्रसूतं रौद्रमन्योन्यस्य विघर्षणात् ।
नदीवेगात् समं स्निग्धं संजातं रौद्रसंज्ञकम् ॥"

वसुधायेऽपि ।

"बदरीप्रवाहसंस्थानं बाणलिङ्गसमाकृति ।
तदन्यत्रापि चोत्पन्नं रौद्रलिङ्गं सुखावहम् ॥
मही[illegible]दायां बाणलिङ्गसमाकृति ।
तदन्यदपि चोत्पन्नं लिङ्गं रौद्रं भविष्यति ॥
रौद्रलिङ्गं समाख्यातं बाणलिङ्गसमाकृति ।
श्वेतं रक्तं तथा पीतं कृष्णं विप्रादिपूजितम् ।
अभावात् सर्व्ववर्णैर्वा सर्व्वेषामिह सिद्धिदम् ।
नर्म्मदाजन्यं रौद्रं बाणलिङ्गमुदीरितम् ॥"

इति रौद्रलिङ्गलक्षणम् ।

शिवनाभिलक्षणं तच्छब्दे द्रष्टव्यम् ॥*॥ अथ देवलिङ्गलक्षणम् । देवलिङ्गमधिकृत्य सिद्धान्तशेखरे ।

"करसंपुटसंकाशं शूलटङ्केन्दुभूषितम् ।
रेखाकोटरसंयुक्तं निम्नोन्नतसमन्वितम् ।
दीर्घाकारञ्च यल्लिङ्गं अग्रभागादिवर्ज्जितम् ॥"

अथ गोललिङ्गलक्षणम् ।

"लिङ्गं गोलमिति प्रोक्तं गोलकं प्रोच्यतेऽधुना ।
कूष्माण्डस्य फलाकारं नागरङ्गफलोपमम् ।
काकडिम्बफलाकारं गोललिङ्गमितीरितम् ॥"

इति गोललिङ्गलक्षणम् ॥*॥

अथार्षलिङ्गलक्षणम् । तत्रैव ।

"नानाकोलफलाकारं अग्रसूक्ष्मविवर्ज्जनम् ।
मूले स्थूलञ्च यल्लिङ्गं कपित्थफलसन्निभम् ।
नालस्य वा फलाकारं मध्ये स्थूलञ्च यद्भवेत् ।
मध्ये स्थूलं वरं लिङ्गमृषिभाग्यमुदीरितम् ॥"

इत्यार्षलिङ्गलक्षणम् ॥*॥

लिङ्गं हि द्विविधमकृत्रिमं कृत्रिमञ्च । अकृत्रिमं स्वयम्भूतं स्वयम्भु बाणलिङ्गादि । कृत्रिमं निर्म्मितं धातुलिङ्गादि । सिद्धान्तशेखरे ।

"तल्लिङ्गं द्विविधं ज्ञेयमचलञ्च चलं तथा ।
प्रत्येकं त्रिविधं ज्ञेयं लिङ्गं तदुभयात्मकम् ॥
प्रासादे स्थापितं लिङ्गमचलं तच्छिलादिजम् ।
स्थापितं अचलं गेहे स्थिरं लिङ्गमयोजिते ॥
पञ्चधा तत् स्थितं लिङ्गं स्वयम्भु देवपालकम् ।
आर्षञ्च मानसं लिङ्गं तेषां लक्षणमुच्यते ॥"

सिद्धान्तशेखरे ।

"नानाच्छिद्रसुसंयुक्तं नानावर्णसमन्वितम् ।
अदृष्टमूलं यल्लिङ्गं कर्कशं भुवि दृश्यते ॥
तत् लिङ्गन्तु स्वयम्भूतमपरं लक्षणच्युतम् ।
स्वयम्भु लिङ्गमित्युक्तं तच्च नानाविधं मतम् ॥
शक्राभमस्तकं लिङ्गं वैष्णवं तदुदाहृतम् ।
पद्माभमस्तकं ब्राह्मं छत्राभं शाक्रमुच्यते ॥
शिरोयुग्मं तथाग्नेयं त्रिपदं याम्यमीरितम् ।
खड्गाभं नैरृतं लिङ्गं वारुणं कलसाकृति ॥
वायव्यं ध्वजवल्लिङ्गं कौवेरन्तु गदान्वितम् ।
ईशानस्य त्रिशूलाभं लोकपालादिभिःकृतम् ।
स्वयम्भु लिङ्गमाख्यातं सर्व्वशास्त्रविशारदैः ॥"

इति स्वयम्भु लिङ्गलक्षणम् ॥*॥

मत्स्यसूक्ते ।

"दृष्ट्वा लिङ्गं महेशस्य स्वयम्भूतस्य पार्व्वति ।
सर्व्वपापविनिर्म्मुक्तः परे ब्रह्मणि लीयते ॥"*॥

एतेषां पूजाफलन्तु तत्रैव ।

"विशेषाच्छैलजं मुक्त्यै भुक्तये चाशुमङ्गलः ।
पार्थिवं भुक्तये प्रोक्तं मुक्तये चाशुमङ्गलः ॥
एवं वै दारवं ज्ञेयं चित्रलिङ्गं तथा पुनः ।
स्थिरलक्ष्मीप्रदं ज्ञेयं हैमं राज्यप्रदञ्च तत् ।
पुत्त्रवृद्धिकरं ताम्रं राङ्गमायुःप्रवर्द्धनम् ॥"

पद्मपुराणम् ।

"पारदञ्च महाभूत्यै सौभाग्याय च मौक्तिकम् ।
[illegible] कनकेन [illegible] सर्व्वकामदम् ॥"

वीरमित्रोदय[illegible]

"सर्व्वा चपप्रदा भूमि[illegible]
[illegible] स्फटिको मरकतो [illegible]
हारौ प्रकाशका: सर्व्वे [illegible]
नानावर्णास्तु विशेषा एवमेव [illegible]
बज्राद्याः स्फाटिकाद्याश्च गुडाद्यादिभि-

लिङ्ग[illegible]

सर्व्वकामप्रदं पुंसां लिङ्गं तात्कालिकं [illegible]

लक्षणसमुच्चये ।

"गान्धं सौभाग्यदं लिङ्गं पीठं [illegible]

[illegible]

तथा ।

"नानागुडोद्भवं लिङ्गं नानाकामप्रदायक[illegible]
सैकतं गुडदं लिङ्गं सौभाग्याय च वालुक[illegible]
उच्चाटने तु पाषाणं मौलं शत्रुक्षयावहम् ।
तात्कालिकं दरिद्रश्च कृत्वा भक्त्या समर्च्चयेत् ।

तथा ।

"कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दन[illegible]
कुङ्कुमस्य त्रयश्चैव शशिना च चतुःसमम् ।
एतद्वै गन्धलिङ्गन्तु कृत्वा संपूज्य भक्तितः ।
शिवसायुज्यमाप्नोति बन्धुभिः सहितो नरः ।
काम्यं पुष्पमयं लिङ्गं चयगन्धसमन्वितम् ।
नवखण्डां धरां भुक्त्वा गणेशोऽधिपतिर्भवेत् ।
रजोभिर्निर्म्मितं लिङ्गं यः पूजयति भक्तितः ।
विद्याधरपदं प्राप्य पश्चात् शिवसमो भवेत् ।
श्रीकामो गोशकल्लिङ्गं कृत्वा भक्त्या प्रपूजयेत् ।
स्वच्छेन कापिलेनैव गोमयेन प्रकल्पयेत् ।
कार्य्यं यच्छक्रमं लिङ्गं यवगोधूमशालिजम् ।
श्रीकामः पुष्टिकामश्च पुत्त्रकामस्तदर्च्चयेत् ।
सिताखण्डमयं लिङ्गं काम्यमारोग्यवर्द्धनम् ।
वश्ये लवणजं लिङ्गं तालचिकटुकान्वितम् ।
गव्यघृतमयं लिङ्गं संपूज्य बुद्धिवर्द्धनम् ।
लवणेन च सौभाग्यं पार्थिवं सर्व्वकामदम् ।
कामदं तिलपिष्टोत्थं तुषोत्थं मारणे [illegible]
भस्मोत्थं सर्व्वफलदं गुडोत्थं प्रीतिवर्द्धनम् ।
गन्धोत्थं गुणदं भूरि शर्करोत्थं सुखप्रदम् ।
वंशाङ्कुरोत्थं वंशकरं गोमयं सर्व्वरोगदम् ।
केशास्थिसम्भवं लिङ्गं सर्व्वशत्रुविनाशनम् ।
क्षोभणे मारणे पिष्टसम्भवं लिङ्गमुत्तमम् ।
दारिद्र्यदं द्रुमोद्भूतं पिष्टं सारस्वतप्रदम् ।
दधिदुग्धोद्भवं लिङ्गं कीर्त्तिलक्ष्मीसुखप्रदम् ।
धान्यदं धान्यजं लिङ्गं फलोत्थं फलदं भवे[illegible]
पुष्पोत्थं दिव्यभोगाद्युर्मुक्ते[illegible]
नवनीतोद्भवं लिङ्गं कीर्त्तिसौभाग्यवर्द्धनम् ।
दूर्व्वाकाण्डसमुद्भूतमपमृत्युविनाशनम् ।
कर्पूरसम्भवं लिङ्गं चक्रा वै भुक्तिमुक्तिदा[illegible]
अयस्कान्तं चतुर्णां तु ज्ञेयं नानाविधि[illegible]

इति मत्स्यपुराण[illegible]

"सर्व्वं भक्तिभवं ज्ञेयं तव [illegible]
यमलिङ्गं महाभूत्यै सौभाग्याय च मौक्तिक[illegible]
[illegible]
[illegible]

क्रापीठं वज्रुचितं स्फाटिकं सर्व्वकामदम् ।
नाक्षमणिजं प्रशस्यार्थे मौक्तिकं तथा ॥
ापजं हीरकं शैवं रोमक्ष्मौक्तिकोद्भवम् ।
प्रशस्त् पुष्पकं तीर्थे वैदूर्य्यं शत्रुमर्द्दनम् ।
ोजं लक्ष्मीप्रदं शैवं स्फाटिकं सर्व्वकामदम् ॥"

इति सारसंग्रहः ॥

महाभुक्तिप्रदं हैमं राजतं भूतिवर्द्धनम् ।
ारकूटं तथा कांस्यं प्रशस्तं सामान्यसुक्तिदम् ॥
पुष्पौत्रायसं लिङ्गं शम्भूर्या नाशने हितम् ।
ौर्तिदं कांस्यजं लिङ्गं राजतं पुत्रवर्द्धनम् ॥
जातं भुक्तिमुक्त्यर्थं मिश्रजं सर्व्वसिद्धिदम् ॥"

इति कालोत्तरतन्त्रम् ॥

त्रैव शिवनारदसंवादे ।
पितृणां तृप्तये लिङ्गं पूज्यं रजतसम्भवम् ।
मजं ब्रह्मलोकस्य प्राप्तये पूजयेत् पुमान् ।
जयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः ॥"
ास्तरक ।
ताम्रलिङ्गं कलौ नार्च्चेत् रैत्यस्य सीसकस्य च ।
त्तचन्दनलिङ्गञ्च शङ्खकांस्यायसं तथा ॥" ॥
ातृकाभेदतन्त्रे १२ पटले ।
पार्थिवे शिवपूजायां सर्व्वसिद्धियुतो भवेत् ।
ापाणे शिवपूजायां द्विगुणं फलमीरितम् ॥
र्णलिङ्गे च पूजायां शम्भूर्या नाशनं मतम् ।
र्व्वसिद्धीश्वरो रौप्ये फलं तस्माच्चतुर्गुणम् ॥
ले पुष्टिं विजानीयात् कांस्ये च धनसंचयः ।
ापाषे चचगुणं लाक्षायां रोगवान् भवेत् ॥
ाटिके सर्व्वसिद्धिः स्यात्तथा मरकते प्रिये ।
ैहलिङ्गे रिपोर्नाशं कामदं भक्तलिङ्गकम् ॥
ालुकायां काम्यसिद्धिर्गोमये रिपुहिंसनम् ।
र्व्वलिङ्गस्य माहात्म्यं धर्म्मकामार्थमोक्षदम् ।
स्कारेण विना देवि पाषाणादौ न पूजयेत् ॥"
तृसंस्कारस्तत्रैव यथा,—
रौप्यञ्च स्वर्णलिङ्गञ्च स्वर्णपात्रे निधाय च ।
ादुतोयं तल्लिङ्गं दुग्धमध्ये दिनत्रयम् ॥
ामकेन स्नापयित्वा कालरुद्रं प्रपूजयेत् ।
डशेनोपचारेण वेदाग्रं पार्व्वतीं यजेत् ॥
ादुतोयं तल्लिङ्गं गङ्गातोये दिनत्रयम् ।
तो वेदोक्तविधिना संस्कारमाचरेत् सुधीः ॥"
सच्छीनलिङ्गपूजने दोषो यथा,—
लिङ्गं सुलक्षणं कुर्य्यात् अनेनलिङ्गमलक्षणम् ।
ङ्गहीने भवेद्व्याधिरधिके शत्रुवर्द्धनम् ॥
ाङ्गहीने विनाशः स्यादधिके च शिशुक्षयः ।
ारे चाधिके हीने राष्ट्रनाशो भवेत् ध्रुवम् ॥
ाटहीने तु दारिद्र्यं शिरोहीने कुलक्षयः ।
लक्षणविहीने च राज्ञो राष्ट्रञ्च नश्यति ।
ात् सर्व्वप्रयत्नेन लिङ्गं कुर्य्यात् सुलक्षणम् ॥"
थ लिङ्गप्रमाणम् ।

देव्युवाच ।

लिङ्गप्रमाणं देवेश कथयस्व मयि प्रभो ।
ाणे च शिलादौ च विशेषो यत्र सम्भवेत् ॥

श्रीशिव उवाच ।

मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् ।

एतदन्यन्न कुर्व्वीत कदाचिदपि पार्व्वति ! ॥"

इति मातृकाभेदतन्त्रे ७ पटलः ॥

अपि च ।

"मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् ।
निजनस्य प्रमाणेन घटनं कारयेद्बुधः ।
अङ्गुष्ठपर्व्वमानन्तु कृत्वा लिङ्गं प्रपूजयेत् ॥"
इति षट्कर्म्मदीपिकाधृतनिर्व्वाणतन्त्रम् ॥ ॥
निजनीकरणमुक्तं कालोत्तरे ।
"लिङ्गे वेद्यां तथा पीठे समस्तजनिपातनात् ।
समस्तैव विजानीयात् निजनीकरणक्लिदम् ॥"
मृत्तिकाभेदेन ब्राह्मणादीनां पूजाफलस्य प्रशस्तत्वमुक्तं तत्रैव ।
"शुक्लं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स एव परमेशानि त्रिवर्गफलभाग्भवेत् ॥
क्षत्रियस्तु वरारोहे रक्तं निर्म्माय पार्थिवम् ।
पूजयेत् सततं यस्तु त्रिवर्गफलभाग्भवेत् ॥
हरितं पार्थिवं देवि निर्म्माय यस्तु पूजयेत् ।
स च वैश्यो महेशानि त्रिवर्गफलभाग्भवेत् ॥
कृष्णं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स शूद्रः परमेशानि त्रिवर्गफलभाग्भवेत् ।
शिलादौ च महेशानि स्थूलञ्च फलदायकम् ।
अङ्गुष्ठमानं देवेशि यदा हेमादिमानकम् ॥
क्रमेण देवदेवेशि फलं बहुविधं लभेत् ।
स्थूलात् स्थूलतरं लिङ्गं यदाद्यं परमेश्वरि ।
पूजनाङ्गारणाद्देवि फलं बहुविधं स्मृतम् ॥"
स्थूलात् स्थूलतरमिति पार्थिवलिङ्गेतरपरम् ।
मृत्तिकातोलकं ग्राह्यमित्यादिवचनात् ॥ ॥
शिलास्फाटिकमरकतादीनां पञ्चनीकरणमुक्तम् । यथा,—
"शिवलिङ्गस्य यन्मानं तन्मानं दक्षकयोः ।
योन्यग्रमपि यन्मानं तदधोऽपि तथा भवेत् ॥"

इति तेजम् ॥

"लिङ्गस्य यादृग्विस्तारः परिणाहोऽपि तादृशः ।
लिङ्गस्य द्विगुणा वेदी योनिस्तदर्द्धसम्मिता ॥
कुर्व्वीताङ्गुलतो न्यूनं न कदाचिदपि क्वचित् ।
रत्नादिशिवनिर्म्माणे मानमिच्छावशाद्भवेत् ॥"

इति तन्त्रान्तरम् ॥

लिङ्गशब्दव्युत्पत्तिर्यथा,—
"आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका ।
आलयः सर्व्वदेवानां लयनाल्लिङ्गमुच्यते ॥"

इति स्कन्दपुराणम् ॥ ॥

लिङ्गमहिमा यथा,—

शिव उवाच ।

"न तुष्याम्यर्चितोऽन्येषां पुष्पधूपनिवेदनैः ।
लिङ्गेऽर्चिते यथात्यर्थं परं तुष्यामि पार्व्वति ॥
एव देवि पुरा सृष्टौ लीनोऽहं सर्व्वदेवतैः ।
लिङ्गत्वालिङ्गमित्युक्तं सदेवासुरकिन्नरैः ॥
प्रवक्ष्यामि दिवं देवि यो मल्लिङ्गार्च्चने रतः ।
स्मृत्वा सर्व्वाणि पापानि निर्द्दहो दग्धकल्मषः ।
मन्मना मत्परकारी मामेव प्रतिपद्यते ॥"
इति गौरीनिर्णीतपद्धतस्कन्दपुराणम् ॥ ॥

प्रणविधिरेव पूजादिफलमपि तत्रैव ।
"यज्ञपूतफलैर्लिङ्गं स्थापित्वा मम मानवाः ।
अश्वमेधसहस्राणां फलमाप्नोति सत्तमः ॥
सुगन्धिचन्दनकरैर्लिङ्गमालिप्य भक्तितः ।
आलिप्यते सुरस्त्रीभिः सुगन्धैर्यक्षकर्द्दमैः ॥" ॥
लिङ्गपूजनाकरणे दोषस्तत्पूजाफलञ्च तत्रैव शिवनारदसंवादे ।
"विना लिङ्गार्च्चनं यस्य कालो गच्छति नित्यशः ।
महाहानिर्भवेत्तस्य दुर्गतस्य दुरात्मनः ॥
एकतः सर्व्वदानानि व्रतानि विविधानि च ।
तीर्थानि नियमा यज्ञा लिङ्गाराधनमेकतः ॥
न लिङ्गाराधनादन्यत् पुरा वेदे चतुर्ष्वपि ।
विद्यते सर्व्वशास्त्राणामेष एव सुनिश्चितः ॥
भुक्तिमुक्तिप्रदं लिङ्गं विविधापन्निवारणम् ।
पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात् ॥
सर्व्वमन्यत् परित्यज्य क्रियाजालमशेषतः ।
भक्त्या परमया विद्वान् लिङ्गमेकं प्रपूजयेत् ॥"

इति स्कन्दपुराणम् ॥ ॥

"अश्वमेधसहस्राणि वाजपेयशतानि च ।
महेशार्च्चनपुण्यस्य कलां नार्हन्ति षोडशीम् ॥"

इति मत्स्यसूक्ते १६ पटलः ॥ ॥

"स्वयं नारायणः प्रोक्तो यदि शम्भुं प्रपूजयेत् ।
स्वर्गे मर्त्त्ये च पाताले ये देवाः संस्थिताः सदा ।
तेषां पूजा भवेद्देवि शम्भुनाथस्य पूजनात् ॥"

इति मातृकाभेदतन्त्रम् ॥ ॥

षट्कर्म्मदीपिकायाम् ।
"असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुसेवनम् ॥" ॥

अथ पारदशिवलिङ्गमाहात्म्यम् ।
"ज्योतिर्म्मयं महालिङ्गं कैलासनगरे प्रिये ।
तस्यैव षोडशांशेन काश्यां विश्वेश्वरः स्थितः ॥
पूर्णलिङ्गं महेशानि शिववीर्य्यं न चान्यथा ।
शिवानमध्ये यथा चक्रं लक्ष्मीनारायणः परम् ।
पारदस्य शतांशेन लक्ष्मीनारायणो न हि ॥
पकारं विष्णुरूपञ्च आकारं कालिका स्वयम् ।
रेफं शिवं दकारञ्च ब्रह्मरूपं न चान्यथा ॥
पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम् ।
यो यजेत् पारदं लिङ्गं स एव शम्भुरव्ययः ॥"

इति मातृकाभेदतन्त्रे ७ पटलः ॥

तस्य निर्म्माणविधानं पारदशब्दे द्रष्टव्यम् ॥ ॥
प्रकारान्तरशिवलिङ्गोत्पत्तिर्यथा,—
"ततो विवाहे निर्व्वृत्ते प्रतस्था यथागताः ।
गताः सर्व्वे महेशोऽपि स्वका वच तदा सह ।
जगाम रेमे स्वका च चिरं निर्भरमानसः ॥
अथ काले कदाचित्तु स्वका वच महेश्वरः ।
रेमे न प्रेमे तं सोढुं सती स्वात्मभवस्तदा ।
उवाच दीनया वाचा देवदेवं जगद्गुरुम् ॥
भगवन् हि शक्नोमि तव भारं सुदुःसहम् ।
त्यजस्व मां महादेव कृपां कुरु जगत्पते ॥
निशम्य वचनं तस्या भगवान् वृषभध्वजः ।
निर्भरं रमणं चक्रे गाढं निर्दयमानसः ॥

यदा तदानीं सवभूतनचोम्
करोति चार्थानपि हन्ति पुंस: ॥
दिशं प्रयात:परिपाल्यमानां
नरस्य यस्य ब्रजत: शृगाली ।
वामा विरावं प्रकरोति शान्ता
भवन्त्यभिप्रेतफलानि तस्य ॥
यो वारुणीं याति दिशं मनुष्य:
शृण्वन् शिवाया रटितानि पृष्ठे ।
गतस्य तस्याशु क्षुताग्रभीति-
रसंशयं स्यात् द्रविणव्ययश्च ॥
यस्योत्तराशां चलितस्य पुंस:
प्राच्यां शिवा सूचति फेत्कृतानि ।
भानु:प्रतीच्यां विहितस्थितिश्चे-
दपेक्षितं सिध्यति तत्क्षणेन ॥
सुचत्युदीच्यां चलितस्य पृष्ठे
शिवा विरावं पुरुषस्य यस्य ।
आस्ते च मध्ये नभसो विवस्वां-
स्तस्यार्थलाभिर्मरणं प्रदिष्टम् ॥
कुबेरकाष्ठां प्रति य: प्रयाति
ज्वालामुखी चाभिमुखी विरौति ।
तस्याध्वगस्याभिमतार्थसिद्धि-
र्भवेच्च सम्पत् पुनरागमश्च ॥
तिष्ठति तीव्रकरो दिशि यस्यां
फेत् कुरुते यदि तत्र शृगाली ।
तद्व्रजत: पथिकस्य भवेतां
निश्चयतो धनजीवितनाशौ ॥
दक्षिणत: प्रथमं यदि पश्चात्
वामगता पथिकस्य शृगाली ।
फेत् कुरुते कुरुते तदवश्यं
क्षेमधनाप्तिगृहागमनानि ॥
अध्वास्य शान्तां ककुभं नरस्य
वामा शृगाली यदि वा रटन्ती ॥
तदार्थलाभं वितरत्यवश्य-
मर्थव्ययं दक्षिणतो रटन्ती ॥
वामा प्रदीप्ते ककुभ: प्रदेशे-
ऽलाभं तथानर्थमुपादिशन्ति ।
शिवा रटन्ती पथि दक्षिणा तु
विपत्त्यनर्थानथ सङ्कटेषु ॥
शान्ते दिगन्ते यदि वा प्रदीप्ते
पृष्ठे प्रयाणे प्रतिषेधविघ्नौ ।
शब्दायमाना तु शिवा पुरस्तात्
विमञ्जयत्यापदगाधसिन्धौ ॥
वामेऽपसव्ये पुरतोऽथ पृष्ठे
पुंस: शिवा जल्पति यत्र तत्र ।
आयान्ति चौरा: प्रथमे विरावे
द्वयोर्भवेत्तस्करदर्शनञ्च ।
तृणादनीऽर्थागमनं तृतीये
तुर्य्ये धृति: पञ्चमकेऽर्थलाभ: ।
षाडिश्चकेनाहिविनाश षष्ठे
भी: सप्तमे स्यादिपवीऽष्टमस्तु ॥
हाहारवं मुञ्चति कृष्णभावा
दाहं तु तस्य बहुदावदरान्ति ।

अग्रेसरा वा पथि वा शिवाया:
वा हिमपातादपि मनीरथानेः ॥
नृपस्य यात्रासमये पुरस्तात्
प्रयाति फेत्कृ निवेदयन्ती ।
कुर्य्याच्छिवा वैरिपराभवं त-
ज्जयश्रियञ्चाभिमतं विदध्यात् ॥
कार्य्यान्तरेष्वप्यनुगम्यमाना
श्रेय:प्रदा शान्तदिशि प्रदिष्टा ।
शिवा प्रदीप्ते तु दिशि प्रदेशे
समारटन्ती महते भयाय ॥
भयोत्तमे दीप्तदिशि प्रदीप्ते-
र्नादैर्नृणां हन्ति भयानि देवी ।
महान्ति सर्व्वाण्यपि शान्तनादा:
शान्तस्थिता सर्व्वभयप्रदात्री ॥
यदा च नद्युत्तरगा नराणां
शब्दं शृगाली कुरुते कदाचित् ।
तटद्वये तत् परिरक्षणीयं
महद्भयं भावि जलेश्वरेभ्य: ॥”
इति श्रीवसन्तराजे शिवारुते यात्राप्रकरणं चतुर्थम् ॥ * ॥
“स्थानस्थितानामपि योगभाजां
नैमित्तिकानामुपदिश्यते तु ।
शिवाविरावैरशिवं शिवञ्च
सुनिश्चितार्थं मुनिसम्मतेन ॥
करोति फे फे इति सर्व्वदिक्षु
यदा तदा स्थानविघातयुद्धे ।
शिवा विधत्ते क्षुधिता त्वसंख्यान्
रौद्रान् स्वरान् मुञ्चति फेदुफेच्चाम् ॥
निरन्तरं रौति विदिक्षु दिक्षु
समन्दकारुण्यरवातुरा फेत् ।
अपत्यमोहेन यदा शृगाली
तामप्यस्पृहा सा कथितेह तज्ज्ञै: ॥
स्थित्वा प्रदीप्ते ककुभो विभागे
ज्वालामुखी फेत् कुरुतेऽतिरौद्रम् ।
ग्रामस्य तस्य प्रकरोति नाशं
तस्याथवा तिष्ठति यस्य मध्ये ॥
ग्रामस्य मध्यं समवाप्य यस्य
ज्वालामुखी मुञ्चति फेत्कृतानि ।
स शून्यतां गच्छति निश्चयेन
लोकस्य वा स्याद्दुर्गं प्रभूतम् ॥
ग्रामान्तिके सप्त दिनानि यावत्
महाभयोत्पादितफेत्कृतानि ।
विरौति चैतत् कुरुते शृगाली
महाविलोकस्य भयं प्रभूतम् ॥
मध्यं दिने यावदहानि पञ्च
शिवा समीपे नगरस्य यस्य ।
विरौति घातं विदधाति तस्य
भयञ्च वह्निप्रभवं प्रभूतम् ॥
पञ्चाहरात्रावपि कथञ्चिदेषा
क्रूरारवा व्याहरते शृगाली ।
यस्यान्तिके तं सहसो हठेन
मुष्णन्ति चौरा जनवसतिवेशे ॥

स्थानस्य वल्मीकमस्ता समीपे
दिनानि पञ्चाचरति प्रणादं ।
स्वरेण रौद्रेण शृगालभार्या
स्यात्तत्र हानिर्महती नराणाम् ।
सुरक्षितस्यापि मनुष्यवर्गे-
र्ग्रामस्य घोरं भवनं विनश्येत् ।
अयं दिनानां दिवसावसाने
शिवा रटन्ती नवभस्वरेण ।
दिग्भ्रारटन्ती सकलास्तु रौद्रं
भ्रमत्यखिन्ना परित: पुरश्चेत् ।
शृगालभार्य्या खलु तद्ब्रवीति
युद्धं महत्तत्र महाभिघातम् ।
ज्वाला विमुञ्चत्यतिरौद्रनादा
समाकुला धावति या समन्तात् ।
कौमारकं वा जनयत्यकस्मात्
कुर्य्याच्छिवा सा युवराजपातम् ।
रोमोद्गमं या जनयत्यकस्मात्
पि हन्त्यतिक्रूररवा नराणाम् ।
मूत्रं पुरीषन्तु तुरङ्गमाणां
वा सर्व्वदा स्यादशिवा शिवेह ।
तरङ्गिणीरोधसि सौम्यरूपा-
ञ्जीन् पञ्च वा मुञ्चति या निनादान् ।
शिवां शिवां तां नृपतिस्तदानीं
वन्देत देवीमभिवन्दनीयाम् ।
श्मशानभूमौ दिनमध्यभागे
मध्ये रजन्या: स्वगृहप्रदेशे ।
या रौति तस्यै बलिमर्घ्ययुक्तं
भक्त्या प्रदद्याद्यदि भद्रमिच्छेत् ।
सर्व्वेषु कार्य्येषु समुद्यतेषु
बलि: शिवाया विनिवेदनीय: ।
गृह्णाति यस्मिन् विषयेऽभुपेत्य
देवी बलिं जल्पति तत्र सिद्धिम् ।”
इति श्रीवसन्तराजे शिवारुते स्थानस्थितप्रकरणं पञ्चमम् ॥ * ॥
“कथ्यते बलिविधानमिदानीं
प्राक्तनागममतेन शिवाया: ।
दिव्यमन्त्रबलिबाधितदोषं
साधिताखिलसमुद्यतकार्य्यम् ॥
शून्यालयं वनमथं श्मशानं
चतुष्पथं मातृगृहं जलान्तम् ।
वल्मीकनिष्कान्तरमेवमाद्या
बलिप्रदानाय मता: प्रदेशा: ॥
तेषाञ्च मध्यादुचितप्रदेशे
विशोधितं मण्डलकं विदध्यात् ।
गौराद्रिकशोकपरीक्षिताया:
संगृह्य गोगोमयमन्तरीक्षात् ।
अत्यन्तजीर्णैर्द्विज्ञावा वत्सावाच विशिष्टा: ।
रोमार्त्तनवसूताया न गोमयमाहरेत् ॥
तस्मिन् विचित्रं वितर्त विदध्यात्
पिष्टातकैर्मण्डलकं नरोत्तम् ।
संपूजयेत्तत्र सुराधिपादीन्
क्रमेण सर्व्वानपि लोकपालान् ।

मध्ये स्तुतेः सखिभिरन्वितेषा
शिवान्विता चिन्मयी प्रसन्ना ।
पूज्या शिवा तुष्यति भक्तियोगात्
प्रभूतपुष्पाक्षतधूपदीपैः ॥
शाल्यन्नपूरैर्दधिमाषकृशरैर्
मोदकपूपलिकाभिरथमत्स्यैः ।
संस्कृतैश्च वराचनमांसैर्
बुद्धिमता बलिकर्म्मणि कार्य्यः ॥
प्राप्याष्टमीं वाथ चतुर्द्दशीं वा
संक्रान्ति मन्त्रेण च सप्रयत्नः ।
बलिं शिवाया निशि निश्चयेन
दद्यान्मनुष्यो यदि भद्रमिच्छेत् ॥

अत्र मन्त्रः । ॐ शिवे ज्वालामुखि बलिं गृहाण गृहाण हुँ फट् स्वाहा । ॐ शिवे शिवदूति भगवति चण्डे इदमर्घ्यं बलिलीलासमुचितं गृहाण गृहाण आगच्छ आगच्छ वायुवेगेन शुभं कुरु कुरु स्वाहा । इत्यर्घ्यमन्त्रः । बलिदानाय मन्त्रान्तरम् । ॐ नमो भगवति एनं एनं बलिं गृह्ण गृह्ण गन्धपुष्पधूपदीपादिकं दह दह पच पच घोररूपिणि भो भगवति पिबत पिबत स्वाहा ।

एतस्य मन्त्रद्वितयस्य मध्यादेकेन केनाप्यभिमन्त्रणीयः ।
बलिः शिवायाः सुमहाप्रभावं
पृथक् पृथक् मन्त्रयुगं वदेतत् ॥
ताम्बूलवस्त्रासनदक्षिणाभि-
र्नैमित्तिकं प्राकृतप्राग्वदत्तम् ।
प्रपूजयेत्तत्र भवत्यभीष्ट-
माचार्य्यवर्य्ये परितोषिते हि ॥
अग्नेर्दिकाबद्धिलतान्तवन्र-
धिष्ठाणि पूर्व्वाचितयेन साद्धम् ।
ज्येष्ठाच सत्यज्य विरौति येह
श्रेयस्करी जम्बुकगेहिनी सा ॥
हितैषिणी सर्व्वसमीहितेषु
देवी भवानी भुवि भैरवा च ।
तस्माधिवासा तपसा सदैव
शिवाहृते तेन यतेत विद्वान् ॥”

इति श्रीवल्लालराजप्राकृते अदागमार्य्यशोभने समस्तव्रतौतुकी विरचितं शिवावतं बलम् ॥ * ॥

अथ तान्त्रिकशिवावलिः । तदुक्तं कुलचूडामणौ ।
“विल्वमूले प्रान्तरे वा श्मशाने वाथ साधकः ।
मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत् ॥
काक्षि काक्षीति वक्तव्यं ततः सा शिवरूपिणी ।
पशुरूपा समाकाति परिवारगणैः सह ॥
सुखा रौति यदेशान्यां सुक्तस्तोऽस्य सुखरम् ।
तदेव मङ्गलं तस्य नान्यथा कुलभूषण ॥
अयत्नमनसानैव नियतं तोषयेच्छिवाम् ।
नित्यमाहं तथा सन्ध्यावन्दनं पितृतर्पणम् ।
तथैव कुलसेवानां नित्यता कुलपूजने ॥
पशुरूपां शिवां देवीं यो नार्च्चयति निर्ज्जने ।
शिवारावेण तस्याशु सर्व्वं नश्यति निश्चितम् ॥
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ।

गृहीत्वा शापं दत्त्वा च शिवा रोदिति निर्ज्जने ॥
एकया भुज्यते यत्र शिवया देव भैरव ।
तत्रैव सर्व्वशक्तीनां प्रीतिः परमदुर्लभा ॥
पशुशक्तिः पक्षिशक्तिर्नरशक्तिर्यथाक्रमात् ।
पूजनात् द्विगुणं कर्म्म मङ्गलं साधयेत्ततः ॥
तेन सर्व्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ।
राजादिभयमापन्ने देशान्तरभयादिके ॥
शुभाशुभानि कर्म्माणि विचिन्त्य बलिमाहरेत् ।
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ॥
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ।
एवमुच्चार्य्य दातव्यो बलिः कुलजनप्रियः ॥
यदि नो भुज्यते वत्स तदा नैव शुभं भवेत् ।
शुभं यदि भवेत्तच्च भुज्यते तद्दिशीवतः ।
एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत् ॥”
इति तन्त्रसारः ॥

**शिवाद्यं**, क्ली, (शिवस्याद्यि कारणत्वेनाद्यस्येति । अच् ।) वस्राद्यम् । इति राजनिर्घण्टः ॥ (अस्य विवरणं वस्राद्यशब्दे द्रष्टव्यम् ॥)

**शिवाटिका**, स्त्री, वंशपत्री । इति भावप्रकाशः ॥

**शिवात्मकं**, क्ली, (शिवः सुखकरः आत्मा स्वरूपां यस्य ।) सैन्धवम् । इति राजनिर्घण्टः ॥ शिवमये, त्रि ॥

**शिवानी**, स्त्री, (शिवस्य भार्य्या । यद्वा, शिवं मङ्गलमानयतीति । आ + नी + डः । गौरादित्वात् ङीष् ।) दुर्गा । इति लोकप्रसिद्धिः ॥ जयन्तीवृक्षः । इति शब्दचन्द्रिका ॥

**शिवाप्रियः**, पुं, (शिवायाः प्रियः ।) छागः । इति त्रिकाण्डशेषः ॥ शिवस्य शिवाया अप्रियवस्तुनि शिवाया वल्लभे च त्रि ॥

**शिवापीडः**, पुं, (शिवस्यापीड इव ।) वकवृक्षः । इति राजनिर्घण्टः ॥ शिवाशिवयोः शेखरश्च ॥

**शिवाफला**, स्त्री, (शिवाया इव फलमस्याः ।) शमीवृक्षः । इति राजनिर्घण्टः ॥

**शिवारातिः**, पुं, (शिवायाः शृगालस्यारातिः ।) कुक्कुरः । इति शब्दमाला ॥ शिवाशिवयोः शत्रुश्च ॥

**शिवालयं**, क्ली, (शिवा आलीयतेऽत्रेति । आ + ली + अच् ।) श्मशानम् । इति हारावली ॥ (यथा, कथासरित्सागरे । ३ । ३३ ।
“व त्वयं युद्धमानौ च पुण्ये शून्ये शिवालये ॥”)

**शिवालयः**, पुं, (शिवायाः शिवस्य वा आलयः ।) रक्ततुलसी । इति शब्दचन्द्रिका ॥ शिवस्य गृहम् । यथा, रामार्च्चनचन्द्रिकायाम् ।
“चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥”
इति तिथ्यादितत्त्वम् ॥

**शिवालुः**, पुं, शृगालः । इति राजनिर्घण्टः ॥

**शिवा(व)बलिः**, पुं, (शिवाभ्यो दीयमानो बलिः ।) रात्रौ शिवादेयमांसप्रधाननैवेद्यम् । यथा ।
अथ शिवाबलिः । कुलचूडामणौ ।
“विल्वमूले प्रान्तरे वा श्मशाने वापि साधकः ।
मांसप्रधाननैवेद्यं सन्ध्याकाले निवेदयेत् ॥
काक्षि काक्षीति वक्तव्ये तदोमा शिवरूपिणी ।
पशुरूपधराकाति परिवारगणैः सह ॥
सुखा रौति यदैशान्यां सुक्तस्तोऽस्य सुखरम् ।
तदेव मङ्गलं तस्य नान्यथा कुलभूषण ॥
अयत्नमनसानैव नियतं तोषयेच्छिवाम् ।
नित्यमाहं तथा सन्ध्यावन्दनं पितृतर्पणम् ॥
तथैव कुलसेवानां नित्यता कुलपूजने ।
पशुरूपां शिवां देवीं यो नार्च्चयति निर्ज्जने ॥
शिवारावेण तस्याशु सर्व्वं नश्यति निश्चितम् ।
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ॥
गृहीत्वा शापं दत्त्वा च शिवा रोदिति निर्ज्जने ।
एकया भुज्यते यत्र शिवया देव भैरव ॥
तत्रैव सर्व्वशक्तीनां प्रीतिः परमदुर्लभा ।
पशुशक्तिः पक्षिशक्तिर्नरशक्तिर्यथाक्रमात् ॥
पूजनात् द्विगुणं कर्म्म मङ्गलं साधयेत्ततः ।
तेन सर्व्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ॥ * ॥
राजादिभयमापन्ने देशान्तरभयादिके ।
शुभाशुभानि कर्म्माणि विचिन्त्य बलिमाहरेत् ॥
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ।
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ॥
एवमुच्चार्य्य दातव्यो बलिः कुलजनप्रियः ।
यदि न भुज्यते वत्स तदा नैव शुभं भवेत् ॥
शुभं यदि भवेत्तच्च भुज्यते तद्दिशीवतः ।
एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत् ॥
नैवेद्योपरि मूलमन्त्रमष्टोत्तरशतं जप्त्वा बलिं दद्यादिति शिवः ।” इति तन्त्रसारः ॥

**शिवाह्वतिः**, स्त्री, जयन्तीवृक्षः । इति शब्दचन्द्रिका ॥

**शिवाङ्गारः**, पुं, (शिवस्याङ्गारो यस्मात् ।) वकवृक्षः । इति राजनिर्घण्टः ॥ शिवस्याङ्गारश्च ॥

**शिवाङ्का**, स्त्री, (शिवेन आङ्का यस्याः ।) वनजटा । इति राजनिर्घण्टः ॥ शिवनामके, त्रि ॥

**शिविः**, पुं, हिंस्रपशुः । इति त्रिकाण्डशेषः ॥ भूर्ज्जवृक्षः । राजविशेषः । स च उशीनरराजपुत्रः । इति मेदिनी ॥ तस्य चरितं यथा,—
मैत्रेय उवाच ।
“शृणु राजन् ! प्रवक्ष्यामि धर्म्मार्थं शिविना यथा ।
धर्म्मार्थं दत्तवान् वत्सं पुरा श्यौशीनरो नृपः ॥
सत्यदानरतं ज्ञात्वा शिविमिन्द्राग्निरुभ्यथौ ।
जिज्ञासार्थं समेयातां वर्त्तमाने महाध्वरे ॥
वह्निर्भूत्वा कपोतस्तु हरिः श्येनपुरःसरः ।
शरणार्थी महीपालं निलिल्ये भयविह्वलः ॥
त्राहि मां पृथिवीपालेत्यवदत् श्येनजाद्भयात् ।
स तमाश्वासयामास कपोतं शरणागतम् ॥
राजानमुपगम्याथ श्येनः प्रोवाच संसदि ।
वचनं शृणु मे राजन् ! क्षुधार्त्तस्य कुटुम्बिनः ॥
धर्म्मात्मानं त्वामाहुर्म्मे पृथिव्यां सर्व्वपार्थिवाः ।
तदिदं कथं कर्म्म कर्त्तुमिच्छसि पार्थिव ॥
सर्व्वेषां सम्भवः कार्य्यः परार्थेषु कथञ्चन ।
परार्थे भवतो नित्यं यमस्य तरोरिव ॥
नोपकारपरेऽप्यस्मुपकारपरो जनः ।
अपकारपरेऽपि स्यादुपकारपरः सदा ॥
ममैव विहितो भागो भक्ष्योऽयं त्वं यदृच्छया ।

स श्येनमाह संप्राप्तस्त्वाहार्थी सन्निधौ मम ।
तस्मात्तवाहं न समर्पयिष्ये
कपोतकं श्येन वदन युक्तम् ।
त्वं मन्यसे तत् करवाणि सर्व्व-
न्दते कपोतात् खलु सत्यमस्य ॥
तुभ्यं हि सम्प्रदास्यं प्रयच्छामि विहङ्गम ।
यथा कामयसे चाप्युत्कर्त्तयित्वा कपोतकम् ॥
श्येनः प्राह किमेतत्ते प्रीतिरासीत् खगे दृढ़ा ।
कथञ्चिदस्य तुल्यानि स्वमांसानि प्रयच्छ मे ॥
राजा तमब्रवीद्धृष्टो यत्त्वं मांसानि याचसे ।
एतद्दयच्छामि ते सद्यः स्वमांसं तुलया धृतम् ॥
एवमुक्त्वा स्वमांसानि कपोतेन समं नृपः ।
उत्कृत्य तोलयामास प्रहृष्टो मनसा ततः ॥
तुलया ध्रियमाणस्तु कपोतो व्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि ततः प्रादात् स पार्थिवः ।
न विद्यते यदा मांसं कपोतेन समं क्वचित् ।
ततः प्रक्षीणमांसोऽपि साधुः सुखयते परम् ॥
यदा तेन न तुल्यं तत् स तुलामारुहत् स्वयम् ।
अन्तःपुरवरस्त्रीषु न राज्ये न च जीविते ॥
तस्यासक्तचित्तेन तेनापेक्षा कृता क्वचित् ।
परदुःखातुरा नित्यं स्वसुखानि महान्त्यपि ॥
नापेक्षन्ते महात्मानः सर्व्वभूतहिते रताः ।
परार्थमुद्यताः सन्तः सन्तः किं किं न कुर्व्वते ॥
तादृगप्यम्बुधेर्व्वारि जलदैस्तत् प्रपीयते ।
एक एव सतां मार्गो यदङ्गीकृतपालनम् ॥
ददाहमकरोत् क्रोडे पावकं यदपांपतिः ।
आत्मानं पीडयित्वापि साधुः सुखयते परम् ॥
ह्लादयन् तापितान् दृक्षो दुःखञ्च सहते स्वयम् ।
अथ तस्मिन् समारूढे पुष्पवर्षं पपात च ॥
देवदुन्दुभयो नेदुस्तुलामौशीनरे नृपे ।
ततस्तस्य तदा ज्ञात्वा वाक्यं चैतदभाषत ॥
शक्रः स्वरूपमास्थाय धर्म्मं राज्ञः परिस्थितिम् ।
इन्द्रोऽहमस्मि भद्रं ते कपोतो हव्यवाहनः ॥
जिज्ञासमानौ त्वां राजन्निमं यज्ञमुपागतौ ।
महाकारुणिकेनेह यत् कृतं तत् सुदुष्करम् ॥
नैव पूर्व्वे नृपाश्चक्रुर्न करिष्यन्ति चापरे ।
यत्ते मांसानि गात्रेभ्यः समुत्कृत्तानि पार्थिव ॥
एषा ते शाश्वती कीर्त्तिर्लोकाननुभविष्यति ।
दिव्यरूपधरश्चैव पालयित्वा महीं चिरम् ॥
सर्व्वान् लोकानतिक्रम्य ब्रह्मलोकं गमिष्यसि ।
एवमुक्त्वा तमिन्द्राग्नी जग्मतुस्त्रिदशालयम् ।
राजा तु क्रतुमिष्ट्वा तं सुहृदे देवतां तदा ॥”
इति वह्निपुराणे शिवेरुपाख्याननामाध्यायः ॥
शिविका, स्त्री, (शिवं करोतीति । शिव + णिच् । ततो ण्वुल् । टापि अत इत्वम् ।) यानविशेषः । झाँपान् इति ख्यातः । इति भरतः ॥ डुली इति पाल्की इति च भाषा । तत्पर्य्यायः । याप्य-यानम् २ । इत्यमरः ॥ शिवीरथः ३ । इति हारावली ॥ तद्दानविधिर्यथा,—
वह्निरुवाच ।
“शृणु तावच्छिविकाख्यं महादानमनुत्तमम् ।
येन वै दत्तमात्रेण मुच्यते नरकार्णवात् ॥
मार्गशीर्षे शुभे पक्षे स्नात्वोपोष्य हरेर्द्दिने ।
माघफाल्गुनयोर्व्वापि वैशाखस्य शरत्सु च ॥
द्वादश्यां हरिमभ्यर्च्च कलसोपरिसंस्थितम् ।
शिविकां चक्रवंशोत्थां चन्दनसमयीं तथा ॥
आनीय सन्निधिं विष्णोः शुभच्छत्रसमन्विताम् ।
संभूष्य च सगृहस्था आगारं तत्र कारयेत् ॥
विद्याभिजनसम्पन्नविदग्धं शास्त्रवित्तमम् ।
आचाराचारं शुचिं दक्षं कलत्रापत्यभूषितम् ॥
प्रातः सभार्य्यमभ्यर्च्च्य वासोभिः स्वर्णभूषणैः ।
उपानच्छुरिकां खड्गां पट्टकञ्चुकवेष्टकाम् ॥
आदर्शस्थगिकां पानीयपात्रं कांस्यभाजनम् ।
चत्वारो वृषभा देया धेनवः शुभलक्षणाः ॥
शिविकावाहकानान्तु तथा छत्रस्य धारके ।
वृत्तिर्देया तथाब्दञ्च वर्षान्तं ब्राह्मणस्य तु ॥]
वर्षे वर्षे पुनर्देयं ब्राह्मणस्य तदैव तु ।
वृत्तिरेव त्वसम्पत्तौ वर्षे वर्षेऽपि वार्षिकी ॥
इहाग्नुत्रातपत्राणं कुरु केशव मे प्रभो ।
त्वत्प्रीणनाय मे दत्तं शास्त्रविद्ब्राह्मणाय वै ॥
यत् प्रभो शिविका देव प्रीतो भव जनार्द्दन ।
दत्तवान् ब्राह्मणविदुषे सपत्नीकाय पुत्रिणे ॥
सुरापस्तेयकृत्तल्पी ब्रह्महा गुरुतल्पगः ।
शिविकादानमाहात्म्यात् मुच्यते नात्र संशयः ॥
पितृपक्षान्मातृपक्षान् पत्नीपक्षांस्तथैव च ।
आत्मानं बन्धुपक्षांश्च तारयेन्नरकार्णवात् ॥
भुक्त्वा स विपुलान् भोगान् इहामुत्र सुखप्रदान् ।
सपत्नीकः सपितृको विष्णुसायुज्यमश्नुते ॥”
इति वह्निपुराणे शिविकादानाध्यायः ॥
शिविपिष्टः, पुं, महादेवः । इति शब्दरत्नावली ॥ शिपिविष्टशब्दार्थोऽप्यत्र ॥
शिविरं, क्ली, (शेरते राजबलान्यत्र । शीङ् स्वप्ने + बाहुलकात् किरच्प्रत्ययेन साधु । इत्युणादि-वृत्तौ उज्ज्वलदत्तः । १ । ५४ ।) निवेशः । इत्य-मरः ॥ द्वे आगन्तुकसैन्यवासे । कटके इत्यन्ये । नृपस्य मूलस्थाने इत्येके । इति भरतः ॥
“शिविरन्तु निवेशे च क्लीवन्तु शूद्रवेश्मनि ॥”
इत्युणादिकोषः ॥ * ॥
अथ शिविरलक्षणम् ।
श्रीभगवानुवाच ।
“शिविरं परिखायुक्तमुच्चैःप्राकारवेष्टितम् ।
युक्ताद्दशद्वारञ्च सिंहद्वारपुरस्कृतम् ॥
युक्तं चित्रैर्व्विचित्रैश्च लम्बितैश्च कपाटकैः ।
निषिद्धवृक्षरहितं प्रविष्टैश्च पुरस्कृतम् ।
सुलक्षणं चक्रवेधं प्राङ्गणञ्च तथैव च ॥”
तत्र विहितनिषिद्धकाष्ठे तथा,—
विश्वकर्म्मोवाच ।
“कस्य कस्य तरोः काष्ठं प्रशस्तं शिविरे प्रभो ।
अमङ्गलञ्च केषां वा सर्व्वं मां वक्तुमर्हसि ॥
श्रीभगवानुवाच ।
आश्रमे नारिकेलश्च गृहिणाञ्च धनप्रदः ।
शिविरस्य यदीशाने पूर्व्वे पुत्रप्रदस्तरुः ॥
सर्व्वत्र मङ्गलार्हश्च तरुराजो मनोहरः ।
रसालश्च पूर्व्वस्मिन् शक्ती सम्पत्करस्तथा ॥
शुभप्रदश्च सर्व्वत्र सुरकारो विशाखा ।
बिल्वश्च पनसश्चैव जम्बीरो बदरी तथा ।
प्रजाप्रदश्च पूर्व्वस्मिन् दक्षिणे धनदस्तथा ।
सम्पत्प्रदश्च सर्व्वत्र वंशो हि वर्द्धते यतो ।
जम्बुश्च दाडिमः कदलीचाम्रकस्तथा ।
बन्धुप्रदश्च पूर्व्वस्मिन् दक्षिणे मित्रदस्तथा ।
सर्व्वत्र शुभदश्चैव धनपुत्रशुभप्रदः ।
हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ।
ईशाने सुखदश्चैव सर्व्वत्रैव विशामव ।
सर्व्वत्र चम्पकः शुक्लो सुखि भद्रप्रदस्तथा ।
अलाबुश्चापि कूष्माण्डं मायामुक्त सुकामुकः ।
खर्ज्जूरी कर्कटी चापि शिविरे मङ्गलप्रदाः ।
वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदाः ।
लतापनश्च शुभदं सर्व्वं सर्व्वत्र निश्चितम् ॥ * ॥
प्रशस्तं कथितं कारो निषिद्धञ्च निशामय ।
वन्यवृक्षो निषिद्धश्च शिविरे नगरेऽपि च ।
वटो निषिद्धः शिविरे नित्यं चौरभयं ततः ।
नगरेषु प्रविष्टश्च दर्शनात् पुण्यदस्तथा ।
द्वे कारो तिन्तिडीवृक्षो यत्नात्तं परिवर्ज्जयेत् ।
शिरेषु धनहानिः स्यात् प्रजाहानिर्भवेत् ध्रुवम् ।
शिविरेऽतिनिषिद्धश्च नगरे किञ्चिदेव च ।
न निषिद्धः प्रविष्टश्च नगरेषु तथा पुरे ।
वाञ्चामतिनिषिद्धञ्च प्राशस्त्यं परिवर्ज्जयेत् ।
खर्ज्जूरश्च लकुचश्चैव निषिद्धः शिविरे तथा ।
न निषिद्धः प्रविष्टश्च ग्रामेषु नगरेषु च ।
इक्षुश्च चणकादीनां धान्यञ्च मङ्गलप्रदम् ।
ग्रामेषु नगरे चापि शिविरे च तथैव च ।
इक्षुरुश्च शुभदः सन्ततं शुभदस्तथा ।
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः ।
कञ्ची हरिमा शुभदा शुभदश्चार्द्रकस्तथा ।
हरीतकी च शुभदा ग्रामेषु नगरेषु च ।
न वाञ्चा भद्रदा नित्यं तथा चामलकी शुभम् ।
गजानामस्थि शुभदमश्वानाञ्च तथैव च ।
कल्याणसुचः श्वसा वाक्तौ स्थापनकारिणाम् ।
न शुभप्रदमन्येषामुच्छन्नकारकं परम् ।
वानराणां नराणाञ्च गर्द्दभानां गवामपि ।
कुक्कुराणां शृगालानां मार्ज्जाराणामभद्रकम् ।
मेटकानां शूकराणां सर्व्वेषाञ्चाशुभप्रदम् ।
ईशाने चापि पूर्व्वस्मिन् पश्चिमे च तथोत्तरे ।
शिविरस्य भद्रं भद्रमन्यत्राशुभमेव च ॥ * ॥
दीर्घे प्रस्थे समानञ्च न कुर्य्याच्छिविरं बुधः ।
चतुरस्रे गृहे कारो दक्षिणा धनदायकम् ।
दीर्घप्रस्थः परिमितो नैवाङ्गेनापि संस्कृतम् ।
शून्येन रहितं भद्रं शून्यं शून्यप्रदं ध्रुवम् ।
प्रस्थे हस्तद्वयात् पूर्व्वं दीर्घे हस्तचतुष्कं तथा ।
दक्षिणां शुभदं द्वारं प्राकारस्य गृहस्य च ।
न मध्यदेशे कर्त्तव्यं किञ्चिन्मूलाद्भिदि शुभम् ।
चतुरस्रं चक्रवेधं शिविरं मङ्गलप्रदम् ।
अभद्रं कर्त्तवेधञ्च शिविरं मङ्गलप्रदम् ।
अभद्रं कर्त्तवेधं प्राङ्गणञ्च तथैव च ।
शिविराभ्यन्तरे ... शुभम् ।
... ॥

